तत्र सम्बोधनपदैर्नरः सम्बोधितोऽपि सन् ।
वाक्यार्थोद्बोधनं कर्तुं पुनराहन्यते तिङा ॥
अनुदात्तपदं[1] दृष्टं वाक्यमध्येऽपि तद् यथा ।
मा नः शंसो अररुष इन्द्र सोमं पिबेति च ॥
तत्र ब्रूमोऽर्थसंस्थानमिह यस्मिन् भवेत् तिङि ।
तन्नः[2] सर्वानुदात्तं स्यादसंस्थित उदात्तवत् ॥
मा प्राप्नोतु[3] कदर्यस्य शंसोऽस्मान् ब्रह्मणस्पते! ।
रक्षैवमिति मन्त्रार्थः पाने चावेशनं फलम् ॥
लुडर्थे ननु वाक्यार्थः स्पष्टं सन्तिष्ठते तव ।
सत्यमाह भवानेतत् काकुस्तत्र तु[4] विद्यते ॥
यथा तिङ्क्षु (हि)युक्तेषु ह्यर्थे वाक्यस्य संस्थितिः ।
एवं लुङ्यपि संस्थानं तस्मिन् काकाविति स्थितिः ॥
परा हि मे विमन्यव आहिष्मा सूनवे पिता ।
नहि वामस्ति दूरके आःयजी वाजसातमा ॥
आश्चर्य एषु मन्त्रेषु तिङर्थः पर्यवस्यति ।
हेतौ संयन्मदायेति तेष्वतस्तिङुदात्तवत् ॥
एवं येनेह युक्तं सत्[5] तिङन्तं न निहन्यते ।
तदर्थे तत्र संस्थानं न तिङर्थे इति स्थितिः ॥
एवं पदे समासे च यत्रोदात्तो ह्यवस्थितः[6] ।
वर्णे पदे वा तत्रापि काकुरस्तीति निश्चयः ॥
तत्रैकस्मिन् पदे काकुर्देवैरेवावगम्यते ।
सूक्ष्मविद्भिः समासस्थः प्राकृतैरपि तिङ्स्वरः ॥
+ + + + + + + + म्लेच्छनव्यवहर्तृषु[7] ।
वाक्यवृत्तिप्रकारोऽयं सदृशो लौकिकेष्वपि ॥
मन्यन्ते पण्डितास्त्वन्ये यथाव्याकरणं स्वरम् ।
व्यवस्थितो व्यवस्थायां हेतुस्तत्र[8] न विद्यते ॥
माधवस्य स्वयं पक्षः स्वरेणैव व्यवस्थितिः ।
अन्यमर्थमभीप्स[9][10] + + + + + + + + + ॥

**अग्निमीळे ।**

अर्थज्ञानमृषिज्ञानं भूयिष्ठमुपकारकम् ।
वक्ष्यन्त ऋषयस्तस्मात् स्वरूपस्थास्तु देवताः ॥

१. 'ननूदा', २. 'न्न स' ख. पाठः. ३. 'मां' क. पाठः. ४. 'न', ५. य', ६. 'व्य', ७. 'मृच्छेन' ख. पाठः. ८. 'तुः कश्चन', ९. 'अअर्थ', १० 'प्सन् मी' क. पाठः.

पादावसानविज्ञानं छन्दोज्ञानेन सिध्यति ।
पारूच्छेपादिषु ज्ञेयमतश्छन्दश्च यत्नतः ॥
विनियोगपरिज्ञानाद् यजुषामर्थनिश्चयः ।
इतिहासैर्ऋगर्थानां बहुब्राह्मणदर्शितैः ॥
उपक्रमेषु सूक्तानामुद्युक्त इव दृश्यते ।
संहरन्निव चान्तेषु सूक्तं ज्ञेयमतो बुधैः ॥

मधुच्छन्दा वैश्वामित्र ऋषिः । अग्निं स्तौमि । पुरो निहितमुत्तरवेद्यां यज्ञस्य गुस्थानं स्वे स्वे काले देवानां यष्टारं ह्वातारं देवानां रमणीयानां धनानां दातृतमम् ॥ १ ॥

**अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत ।**
**सदेवाँएहवक्षति ॥ २ ॥**

**अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत ।**
**सः । देवान् । आ । इह । वक्षति ॥ २ ॥**

### स्कन्दस्वामीयम् ।

किं कारणम्, उच्यते, यस्मात् -- पूर्वेभिः ऋत्विग्भिः पूर्वैरस्मत्तः पूर्वकालैर्भृग्वङ्गिरःप्रभृतिभिः । ईड्यः स्तुत्यः । नूतनैरुत । नूतनमिति नवनाम । उतशब्दोऽप्यर्थे समुच्चये । नवैश्चेत्यर्थः । यावान् कश्चिद् ऋषिः, तेन सर्वेण यतः स्तोतव्यः, अतोऽहं स्तौमीत्यर्थः । एवमस्यार्धर्चस्य पूर्वयर्चैकवाक्यता । अपरः पादो भिन्नं वाक्यम् । स प्रकृतोऽग्निः देवानेह वक्षति । आ इत्युपसर्गो व्यवहितोऽपि वक्षतीत्याख्यातेन सम्बध्यते । लडर्थे लेट् । इहेति कृत्स्नस्य जगतः प्रतिनिर्देशः । इहेति कृत्स्ने जगति । स एव देवान् आवहति यज्ञेषु, नान्यः कश्चिदित्यर्थः । अथवा अनयोरर्धर्चयोरेकवाक्यताप्रसिद्ध्यर्थं यत्तदोः उद्देशप्रतिनिर्देशार्थयोर्नित्यसम्बन्धात् स देवानिति च प्रतिनिर्देशार्थतच्छब्दश्रुतेः पूर्वस्मिन्नर्धर्चे उद्देशार्थो यच्छब्दोऽध्याहर्तव्यः । यः पूर्वैर्नवैश्च स्तुत्योऽग्निः, स देवानिह जगति आवक्षत्यावहति । अथवा, इहेति प्रकृतस्य कर्मणः प्रतिनिर्देशः । वक्षतीति लोडर्थे लट् । इह कर्मणि देवानावहत्विति ॥ २ ॥

### वेङ्कटमाधवीयम् ।

अग्निः पूर्वेभिः[१] । अग्निः पूर्वैर्ऋषिभिः स्तोतव्योऽस्माभिश्च नवतरैः । स देवानि-[२]हावहति ॥ २ ॥

---

१ 'पूर्वैर्ऋ' क. पाठः.   २. 'तु' ख. पाठः.

अ॒ग्निना॑ र॒यिम॑श्नव॒त्पोष॑मे॒व दि॒वेदि॑वे ।

य॒शसं॑ वी॒रव॑त्तमम् ॥ ३ ॥

अ॒ग्निना॑ । र॒यिम् । अ॒श्न॒व॒त् । पोष॑म् । ए॒व । दि॒वेऽदि॑वे ।
य॒शस॑म् । वी॒रव॑त्ऽतमम् ॥ ३ ॥

स्कन्दस्वामीयम् ।

अग्निनेति तृतीयानिर्देशाद् दत्तमिति वाक्यशेषः । पञ्चम्यर्थे वा तृतीया। अग्निना दत्तम्, अग्नेर्वा सकाशात् । रयिं धनम् । अश्नवद् अश्नुते प्राप्नोति । कः, सामर्थ्यात् स्तोता । नच केवलं धनं, किंतर्हि, पोषमेव । एवशब्दोऽवधारणासम्भवाच्चार्थे । पुष्टिं च । कदा, दिवे दिवे अहन्यहनि । सर्वकालमित्यर्थः । यशसम् । यशःशब्दः कीर्तिपर्यायः । छान्दसत्वाच्चामो न लुक् । यशश्च कीर्तिं चेत्यर्थः । कीदृशं यशः, उच्यते । वीरवत्तमम् । वीराः पुत्रास्ते यस्मिन् सन्ति तद् वीरवद्, अतिशयेन वीरवद् वीरवत्तमम् । बहुभिः पुत्रैः सहितमित्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

अग्निना रयिम् अग्निना स्तुतेन पशून् प्रजाश्चाप्नोति[1] पोषं च प्रजानां पशूनां चान्वहं यशश्चातिशयेन वीरपुरुषयुक्तम् । यशसशब्दो यशःशब्दपर्यायो मध्योदात्तः ॥ ३ ॥

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ ।

स इद्दे॒वेषु॑ गच्छति ॥ ४ ॥

अग्ने॑ । यम् । य॒ज्ञम् । अ॒ध्व॒रम् । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ ।
सः । इत् । दे॒वेषु॑ । ग॒च्छ॒ति ॥ ४ ॥

स्कन्दस्वामीयम् ।

हे अग्ने! यं यज्ञम् । अध्वरशब्दोऽयं यज्ञमित्यनेन पौनरुक्त्यान्न यज्ञनाम । किंतर्हि, तद्विशेषणम् । हिंसावचनो ध्वरतिः हिंसाकर्मा। ध्वरणं ध्वरो

---

१. 'प्राप्नो' ख. पाठः.

हिंसा यस्मिन् नास्ति, सोऽध्वरः । यज्ञे हि सर्वस्यानुग्रहः, न हिंसा । येऽपि हि तत्र पश्वादयो हिंस्यन्ते तेषामप्यनुग्रहमेव शिष्टाः स्मरन्ति —

"ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं (मिथु ? निध)नं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥"

इति । तस्माद् उपपन्नं हिंसावर्जितत्वम् । अथवा षष्ठ्यर्थे बहुव्रीहिः । अविद्यमानो ध्वरो यस्य सोऽध्वरः । रक्षोभिरहिंसितत्वगुणमित्यर्थः । सर्वत्र षष्ठ्यर्थे द्वितीया । यस्य यज्ञस्य हिंसावर्जितस्य विश्वतः सर्वतः परिभूः । परिपूर्वो भवतिः सर्वत्र परिग्रहे । रिग्रही भवसि । स इदिति । इच्छब्द एवार्थे । स एव देवेषु गच्छति ; दे स्तमेव परिगृह्णन्ति, नान्यमित्यर्थः ॥ ४ ॥

## वेङ्कटमाधवीयम् ।

अग्ने यं यज्ञम् । हिंसारहितमहिंसितं त्वत्सन्निधानादसुरैः । सर्वतः परिभवसि गार्हपत्यादिव्यूहेनारानिव नेमिः स एव देवेषु गच्छति ॥ ४ ॥

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।
देवो देवेभिरा गमत् ॥ ५ ॥

अग्निः । होता । कविऽक्रतुः । सत्यः । चित्रश्रवःऽतमः ।
देवः । देवेभिः । आ । गमत् ॥ ५ ॥

## स्कन्दस्वामीयम् ।

अग्निर्होता देवानाम् । कविक्रतुः । कविशब्दोऽत्र क्रान्तवचनः । न मेधाविनाम । क्रतुशब्दः प्रज्ञानाम कर्मनाम वा । क्रान्तं गतं सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः । सत्यः अभिसम्पादकः । यथाभिलषितफलद इत्यर्थः । चित्रश्रवस्तमः । 'चायृ पूजानिशामनयोरि'त्यस्य चित्रं पूजनीयम् । विचित्रपर्यायो वा चित्रशब्दः । श्रव इत्यन्ननाम वा, धननाम वा, कीर्त्तिपर्यायो वा । अतिशयेन पूज्यं विचित्रं वा अन्नादीनामन्यतमं यस्य स चित्रश्रवस्तमः । देवो दानादिगुणः । देवेभिः । सहयोगलक्षणा एषा तृतीया । देवैः सह । आगमत् आगच्छतु ॥ ५ ॥

वेङ्कटमाधवीयम् ।

अग्निर्होता । क्रान्तप्रज्ञः सत्यकर्मातिशयेनाश्चर्यश्रवणो देवो देवैः सहागच्छतु ॥ ५॥

इति प्रथमस्य प्रथमे प्रथमो वर्गः ॥

---

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत्तत्सत्यमङ्गिरः ॥ ६ ॥

यत् । अङ्ग । दाशुषे । त्वम् । अग्ने । भद्रम् । करिष्यसि ।
तव । इत् । तत् । सत्यम् । अङ्गिरः ॥ ६ ॥

स्कन्दस्वामीयम् ।

अङ्गेति निपातोऽत्र पादपूरणः क्षिप्रार्थो वा सामर्थ्यात् । यत् क्षिप्रं दाशुषे दाश्वान् यजमानः हविषां दातृत्वात् तस्मै[१] । त्वं हे अग्ने! भद्रं भजनीयं स्तुत्यम् उत्कृष्टम् । इष्टमित्यर्थः । किं पुनस्तद्, धनमन्नं वा । करिष्यसि । दाशुष इति सम्प्रदानचतुर्थीश्रुतेरिह करोतिः क्रियासामान्यवचनो दाने वर्तते । दास्यसीत्यर्थः । तवेत्तत् । इच्छब्द एवार्थे वर्तते । तवैव तद् । यज्ञान्तरे हविः कृत्वा तुभ्यमेव प्रदास्यत इत्यर्थः । सत्यमविसंवाद्येवैकं नैतदनृतं मयोच्यत इत्यर्थः । अथवा करिष्यसीत्ययं करोतिरन्तर्णीतसनर्थो द्रष्टव्यः । लडर्थे लृट् । यद् यजमानाय भद्रं धनमन्नं वा चिकीर्षसि, तवैव तत् सत्यं नान्यस्य कस्यचित् । यथाचिकीर्षितदानकरणसमर्थो नान्यः कश्चिदित्यर्थः । हे अङ्गिरः ! । अङ्गिरा ऋषिः । तस्योत्पत्तिकारणम्[२]ग्निः, नाग्नि[३]रङ्गिराः । एवं ह्यैतिहासिकाः स्मरन्ति—

"त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ।
आहरत् सहितः साध्यैर्विश्वेदेवैस्तथा स ह ॥
तत्र वाग् दीक्षणीयायामाजगाम शरीरिणी ।
रेतश्चस्कन्द तां दृष्ट्वा तस्याथ वरुणस्य च ॥

---

१. 'स्मै हे', २. 'स्थानम' ख. पाठः. ३. 'म्ने' क. पाठः.

तच्छुक्रं प्रवहन् वायुरग्नौ प्रास्यद् यदृच्छया ।
ततोऽर्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥''

इति । तेनाङ्गिरसः कारणमग्निर्नाम्नाङ्गिरा । अत इदं सोऽयमित्यभिसम्बन्धात् कार्यशब्देन कारणस्याभिधानम् । अङ्गिरसः कारणभूते(न ?)त्यर्थः । अथवा गुणतोऽग्नेरिदमभिधानम् । अङ्गानि शरीरावयवा(नि ? :) तद्वदङ्गि शरीरं, तस्य स्थितिहेतुः अशितपीतरसोऽङ्गिरसः तं करोति अङ्गिरसयति । 'तत् करोति तदाचष्टे' (वा० ३-१-२६) इति णिच् । ण्यन्तात् क्विप् । हे अङ्गिरः ! शरीरस्थितिहेतोरशितपीतरसस्य कर्तरित्यर्थः । जाठरोऽप्यग्निरन्नं रसीकरोति रसो लोहितमांसस्नाय्वस्थिमज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति ॥ ६ ॥

## वेङ्कटमाधवीयम् ।

यदङ्ग । यत् त्वं[1] क्षिप्रमग्ने ! हविः प्रयच्छतेऽनन्तरमेव कल्याणं करिष्यसि । तवैव तत् सत्यमङ्गिरस्त्वमेकः, अन्यस्तु कृतं विस्मरत्यपि ॥ ६ ॥

**उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यम् ।**

**नमो॒ भर॑न्त॒ एम॑सि ॥ ७ ॥**

उप॑ । त्वा॒ । अ॒ग्ने॒ । दि॒वेऽदि॑वे । दोषा॑ऽवस्तः । धि॒या । व॒यम् ।
नमः॑ । भर॑न्तः । आ । इ॒म॒सि॒ ॥ ७ ॥

## स्कन्दस्वामीयम् ।

उपेत्युपसर्गः इमसीत्यन्तेनाख्यातेन सम्बन्धयितव्यः । (त्वा ?) हे अग्ने ! दिवे दिवे अहन्यहनि दोषावस्तः ! । दोषेति रात्रिनाम । 'वस आच्छादने' । रात्रौ स्वेन ज्योतिषा तमसामाच्छादयितः ! । धिया यादृश्यस्माकं प्रज्ञा तादृश्या वयं नमः स्तुतिं भरन्तः । 'हृञ् हरण' इत्येतस्यैवैतत् । भत्वं 'हृग्रहोर्भश्छन्दसि' (वा० ३-१-८४) इति । हस्य भः । हरन्तः प्रापयन्तः, स्तुतिं कुर्वन्त इत्यर्थः । त्वा त्वाम् उप एमसि । आङत्र धात्वर्थानुवादी । उपागच्छामः ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

उप त्वाग्ने । उपगच्छामस्त्वामग्ने ! वयमन्वहं सायं[3] प्रातश्चाग्निहोत्रकर्मणा नमो भरन्तः ॥ ७ ॥

---

१. 'त्वम' ख. पाठः. २. 'रसांम', ३. 'यं च प्रा' क. पाठः.

**राजन्तमध्वराणांगोपामृतस्यदीदिविम्।**

**वर्धमानंस्वेदमे ॥ ८ ॥**

**राजन्तम्। अध्वराणाम्। गोपाम्। ऋतस्य। दीदिविम्। वर्धमानम्। स्वे। दमे ॥ ८ ॥**

### स्कन्दस्वामीयम्।

कीदृशं त्वाम्, उच्यते — राजन्तम्। राजतिरैश्वर्यकर्मा। ईशानम्। कस्य, अध्वराणां यज्ञानाम्। गोपां रक्षितारं च। कस्य, ऋतस्य यज्ञस्यैव। ऋतशब्दो ह्यपठितोऽपि भूयिष्ठं यज्ञनाम दृश्यते। दीदिविम् अत्यर्थं दीप्तं वर्धमानं स्वे आत्मीये दमे य(ज्ञं? ज्ञ)गृहे। दम इति गृहनाम सामर्थ्यादत्र यज्ञगृहे वर्तते ॥ ८ ॥

### वेङ्कटमाधवीयम्।

राजन्तमध्वराणाम्। दीप्यमानं यज्ञानां स्वे दम आहवनीये समिध्यमानमुपेमो गोपायितारं सत्यस्य दीप्तम् ॥ ८ ॥

**सनःपितेवसूनवेऽग्नेसूपायनोभव।**

**सचस्वानःस्वस्तये ॥ ९ ॥**

**सः। नः। पिताऽइव। सूनवे। अग्ने। सुऽउपायनः। भव। सचस्व। नः। स्वस्तये ॥ ९ ॥**

### स्कन्दस्वामीयम्।

स इति पूर्वप्रतिनिर्देशो वा तच्छब्दश्रुतिसामर्थ्यादेव वा योग्यार्थसम्बन्धो वा। यच्छब्दोऽध्याहर्तव्यः। यं त्वामस्तोष्म(हि) इति। स त्वं नः अस्माकं पितेव सूनवे। सूनुरित्यपत्यनाम। षष्ठ्यर्थे चात्र चतुर्थी। यथा पिता पुत्रस्य, एवं हे अग्ने! सूपायनः सूपगमः सुखोपसर्पो भव। सचस्व सेवस्व च नः अस्मान् स्वस्तये। स्वस्तीत्यविनाशनाम। अविनाशाय। रक्षि(त? तु)मस्मान् अस्मत्समीपे नित्यं भवेत्यर्थः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

स नः । स त्वमस्मभ्यं यथा पिता पुत्राय सूपचरः, एवं सूपचरो भव । सेवस्व चास्मानविनाशाय ॥ ९ ॥

इति प्रथमस्य प्रथमे द्वितीयो वर्गः ॥

वायवायाहिदर्शतेमेसोमाअरंकृताः ।

तेषांपाहिश्रुधीहवम् ॥ १ ॥

वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरम्ऽकृताः । तेषाम् । पाहि । श्रुधि । हवम् ॥ १ ॥

स्कन्दस्वामीयम् ।

पृथग्देवत्याः सप्तात उत्तरेऽनन्तरास्तृचाः । ये सप्त तृचा अत उत्तरे अनन्तरा एव (पृथग्) देवत्याः । तृचो वायव्यः । प्रथमस्तावत् तृचो वायुदेवतः । हे वायो ! आयाहि आगच्छ । हे दर्शत ! । अर्हे कृत्यार्थेऽयमतच् । दर्शनीय ! दर्शनार्ह ! । यो हि दृष्टो दर्शनफलं साधयति, स दर्शनार्हः नेतरः । किं कारणमागच्छानि । उच्यते । इमे सोमा अरं कृताः । अलंशब्दस्य पर्याप्त्यर्थस्य भूषणार्थस्य वेदम् । लकारस्य रत्वं छान्दसम् । पर्याप्ताः कृताः भूषिता वा । बहवः कृताः श्रयणादिभिर्वा संस्कारैः संस्कृता इत्यर्थः । तेषाम् । द्वितीयार्थे षष्ठी एषा । षष्ठीनिर्देशादेव वा एकदेशमिति शेषः । तान् वैकदेशं स्वांशलक्षणं पाहि पिब अतः सप्रयोजनत्वादागमनस्य श्रुधि शृणु हवम् आह्वानम् । मात्रानादरं कृथाः ॥ १ ॥

वेङ्कटमाधवीयम् ।

वायवायाहि । पूर्वसूक्तं प्रातरनुवाके शंसनीयम् । अथ सूक्ताभ्यां प्रातःसवनदेवताः स्तौति । वायवायाहि दर्शनीय ! इमे सोमाः पवमानाभिषवाभ्यामलङ्कृताः स्तान् पिब शृणु च नो ह्वानम् ।

चादिलोपे विभाषेति यस्तिङ् नेह निहन्यते ।
स्फुटमर्थं वदेत् तस्य निहतश्चेदथास्फुटम् ॥
निहन्यमाने पूर्वेऽस्मिन् द्विः संस्थापनमिष्यते ।
पिब सोमानिमांश्च त्वं शृणु ह्वानमिदं च नः ॥

इति॥ १ ॥

१., २. 'चा' क. पाठः. ३. 'वा टिको', ४. 'नः ॥ १॥'ख. पाठः.

वाय॑उ॒क्थेभि॑र्जरन्ते॒त्वामच्छा॑जरि॒तार॑: ।

सु॒तसो॑मा अह॒र्विदः॑ ॥ २ ॥

वायो॒ इति॑ । उ॒क्थेभि॑: । ज॒र॒न्ते॒ । त्वाम् । अच्छ॑ । ज॒रि॒तार॑: ।

सु॒तऽसो॑माः । अ॒हः॒ऽविदः॑ ॥ २ ॥

## स्कन्दस्वामीयम् ।

उक्थशब्दः स्तोत्रवचनः । स्तोत्रैः । जरन्ते त्वामच्छ । अच्छशब्दोऽभेः स्थाने वर्तते । उपसर्गार्थवर्तित्वाच्च जरन्त इत्याख्यातेन सम्बध्यते । जरतिश्चात्र स्तुत्यर्थः । जरते ह्वयतीत्यर्चतिकर्मसु पठितत्वात् । अभिजरन्ते अभिष्टुवन्ति त्वां जरितारः स्तोतारः । जरितेति होतृनाम । कीदृशाः, सुतसोमाः कृतसोमाभिषवाः । तुभ्यं यः प्रदास्यते सोमः स्तुताय तमभिषुत्येत्यर्थः । अहर्विदः । अहश्शब्दोऽत्राह्ना यः समाप्यते ज्योतिष्टोमादिः (सोमादिः ?) सोमयागः तस्य वाचकः, न दिवसस्य । प्रक्रान्तस्य ज्योतिष्टोमादेरहःपरिमितस्य सोमयागस्य ज्ञातार इत्यर्थः ॥ २ ॥

## वेङ्कटमाधवीयम् ।

वाय उक्थेभिः । वायो ! त्वां प्रति शस्त्रैः स्तुवन्ति स्तोतारोऽभिषुतसोमाः । अहर्विदः लब्धाहर्मुखाः ॥ २ ॥

वायो॒तव॑प्रपृञ्च॒तीधेना॑जिगातिदा॒शुषे॑ ।

उ॒रू॒चीसोम॑पीतये ॥ ३ ॥

वायो॒ इति॑ । तव॑ । प्र॒ऽपृ॒ञ्च॒ती । धेना॑ । जि॒गा॒ति॒ । दा॒शुषे॑ ।

उ॒रू॒ची । सोम॑ऽपीतये ॥ ३ ॥

## स्कन्दस्वामीयम् ।

हे वायो ! तवावयवभूता प्रपृञ्चती । 'पृची सम्पर्के' । सामर्थ्याच्च सोमसम्पर्के वर्तते, नच यत्रक्वचित् । सम्पर्केण चात्र स्वहेतुरभिलाषो लक्ष्यते ।

१. 'माःल' क. पाठः.

अभिलाषार्थ एव वा[1] पृञ्चतिः । प्रकर्षेण सोममभिलषन्तीत्यर्थः । अथवा पपृक्षोमयहृयतीत्यर्चतिकर्मसु पाठात् पृञ्चतिः स्तुत्यर्थोऽपि न सम्पर्कार्थ एवेति गम्यते । व्यत्ययेन वा शप्प्रत्ययः कर्मणि। प्रपृञ्चती प्रकर्षेण स्तूयमानेत्यर्थः । धेना जिह्वा । किं करोति । उच्यते । जिगाति । गतिकर्मायं जिगातीन्वतीति गतिकर्मसु पाठात् । गच्छति । दाशुषे । 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ—'(२-३-१२) इत्येवमियं कर्मेण चतुर्थी। दाश्वांसं यजमानं प्रतीत्यर्थः । कीदृशी, उरूची । उरुशब्दो बहुनाम । अञ्चतिर्गत्यर्थः । बहून् यजमानान् प्रति गन्त्री । अवयवभूतजिह्वागमनेनात्रावयविनो वायोरेव गमनं लक्ष्यते । त्वं गच्छसीत्यर्थः । किमर्थं, सोमपीतये सोमपानार्थम् ॥ ३ ॥

वेङ्कटमाधवीयम् ।

वायो तव । वायो! अनेन स्तोतॄन् प्रपृञ्चती[2] संयोजयन्ती शतं युष्मभ्यं सहस्रं युष्मभ्यमित्येवं बहूञ्चन्ती तव वाग् दाश्वांसमुद्दिश्य सोमपानार्थं निष्क्रामति ॥ ३ ॥

**इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम् ।**

**इन्द॑वो वामु॒शन्ति॒ हि ॥ ४ ॥**

**इन्द्र॑वायू॒ इति॑ । इ॒मे । सु॒ताः । उप॑ । प्रयः॑ऽभिः । आ ।**

**ग॒त॒म् । इन्द॑वः । वा॒म् । उ॒शन्ति॑ । हि ॥ ४ ॥**

स्कन्दस्वामीयम् ।

तृच ऐन्द्रवायवः । ऐन्द्रवायवो[3]ऽपि[4] तृच एव। हे इन्द्रवायू! इमे सुता अभिषुताः सोमाः । एतद् ज्ञात्वा । उप प्रयोभिरागतम् । उपेत्युपसर्ग आगतमित्याख्यातेन सम्बध्यते । प्रयश्शब्दो यातेर्धातोर्गन्तृवचनः । प्रकर्षेण गन्तृभिरत्यन्तशीघ्रैरश्वै(र्ग ? राग)च्छतम् । प्रयश्शब्दोऽपठितोऽन्नमप्यन्ननाम । सहयोगलक्षणा चात्र तृतीया । इमे अभिषुताः सोमा नच केवलाः, किंतर्हि, सवनीयपुरोडाशादिभिरन्नैः सह । एतद् ज्ञात्वो (प ? पा)गच्छतमिति । अथवा, उपागच्छतमित्येतदपेक्ष एव सहयोगः । अन्नैः सहोपागच्छतम् । मह्यं यानि

१. 'वा सामर्थ्यात् पृ', २. 'ती' ख. पाठः. ३. 'ई', ४. 'वतृचोऽपि' क. पाठः.

दातव्यान्यन्नानि, तानि गृहीत्वोपागच्छतमित्यर्थः। कस्मात्। इन्दवो वामुशन्ति हि। हिशब्दो यस्मादर्थे। यस्मादिन्दव एते सोमा वां युवाम् उशन्ति कामयन्ते वयमिन्द्रवायुभ्यां पीयेमहीत्येवम्। तस्मादुपागच्छतमिति ॥ ४ ॥

### वेङ्कटमाधवीयम्।

इन्द्रवायू। इमे[1] सोमाः सुता अस्माकं प्रदित्सितैरन्नैः सहोपागच्छतम्। एते सोमा वां कामयन्ते हि ॥ ४ ॥

**वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू।**

**तावा यातमुप द्रवत् ॥ ५ ॥**

**वायो इति। इन्द्रः। च। चेतथः। सुतानाम्। वाजिनीवसू इति वाजिनीऽवसू। तौ। आ। यातम्। उप। द्रवत् ॥ ५ ॥**

### स्कन्दस्वामीयम्।

तावायातमिति तच्छब्दाद् यच्छब्दोऽत्राध्याहर्तव्यः। यौ हे वायो! इन्द्रश्च चशब्दात् त्वं च चेतथः जानीथः। किं, सुतानाम्। द्वितीयार्थे षष्ठी। अथवा, षष्ठीश्रुतिसामर्थ्यादेव वा शेषमिति वाक्यशेषः। सुतान् सोमान् सुतानां सोमानां वा शेषं स्वांशम्। वाजिनीवसू। वाजिनीत्येतदिहासम्भवान्नोषोनाम। किंतर्हि, यौगिकम्। वाजो हविर्लक्षणमन्नं, तद् यस्या अस्ति सा वाजिनी यागसन्ततिः तद्वन्तौ। हविष्मद्यागसन्ततिधनावित्यर्थः। अथवा, वाजो वेगो बलं वा, तद्वती वाजिनी सेना तद्वन्तौ वेगबलयोरन्यतरेण युक्तया सेनयोपेतावित्यर्थः। तावायातमिति। उपसर्गः पुरस्तादाख्यातस्य सम्बन्धयितव्यः। उपागच्छतम्। द्रवत् क्षिप्रम्। मक्षुद्रवदिति हि क्षिप्रनामसु पठितम् ॥ ५ ॥

### वेङ्कटमाधवीयम्।

वायविन्द्रः[2]। वायो! त्वं चेन्द्रश्च दूरस्थावेव[3] सुतान् सोमान् जानीथः[4]। तौ क्षिप्रमुपागच्छतमन्नेन वासयितारौ[5] वाजिनीवसू इति।

सुतसोमपरिज्ञानं नवोगमनकारणम्।
नचोदात्तमिहाख्यातं वक्ष्यते तत्र कारणम् ॥

---

१. 'मे। इन्द्रवायू इमे सो', २. 'न्द्रो दू', ३. 'व सोमान् सुतान् जा' क. पाठः. ४. 'थः। क्षि' ख. पाठः. ५. 'त्वा' क. पाठः.

ऋचामभिहितार्थानां यथा पश्चात् समन्वयः ।
हेतुत्वहेतुमद्भावौ तथैवात्रापि सङ्गतौ ॥

इति ॥ ५ ॥

इति प्रथमस्य प्रथमे तृतीयो वर्गः ॥

**वायविन्द्रश्चसुन्वतआयातमुपनिष्कृतम् ।**
**मक्ष्वि१त्थाधियानरा ॥ ६ ॥**

**वायो इति । इन्द्रः । च । सुन्वतः । आ । यातम् । उप । निःऽकृतम् । मक्षु । इत्था । धिया । नरा ॥ ६ ॥**

स्कन्दस्वामीयम् ।

हे वायो! इन्द्रश्च चशब्दात् त्वं च सुन्वतः सोममभिषुण्वतः यजमानस्य स्वभूतम् । आयातम् उप उपागच्छतम् । निष्कृतम् । निरित्येष समित्येतस्य स्थाने । संस्कृतं वेद्याख्यं प्रदेशम् । मक्षु क्षिप्रम् । इत्थाशब्दोऽमुत इत्यस्यार्थे । अमुतोऽन्तरिक्षात् स्वस्मात् स्थानात् । धीरिति कर्मनाम । हेतौ च तृतीया । प्रयोजनस्य च हेतुत्वेन विवक्षा । कर्मणा हेतुना । अस्मदीययागकर्म परिसमापयितुमित्यर्थः । नहि युवयोरनागतयोरेतत् परिसमाप्यते । अथवा इत्था इति सत्यनाम धियश्च विशेषणम् । सत्येन भवतोरविसंवादिना सर्वदैव युष्मत्सम्बद्धेन कर्मणा हेतुनास्मदीययागकर्म परिसमापयितुमित्यर्थः । हे नरा! । मनुष्यनामैतत् । देवानां च मनुष्यत्वासम्भवात् सर्वत्र तदाकारत्वान्मनुष्यनामभिर्व्यपदेशः । मनु(ष्यकारो ? ष्याकारौ) । यथा मनुष्यो हस्ताद्युपेतशरीरस्तद्वद्धस्ताद्युपेतशरीरावित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

वायविन्द्रः । वायाविन्द्रश्च सुन्वतः संस्कृतं सोममुपागच्छतं शीघ्रमित्थं क्रियमाणं कर्मोद्दिश्य नेतारौ ॥ ६ ॥

**मित्रंहुवेपूतदक्षंवरुणंचरिशादसम् ।**
**धियंघृताचींसाधन्ता ॥ ७ ॥**

१. 'स्तुतसो' क. पाठः.

मित्रम् । हुवे । पूतऽदक्षम् । वरुणम् । च । रिशादसम् ।
धियम् । घृताचीम् । साधन्ता ॥ ७ ॥

## स्कन्दस्वामीयम् ।

मैत्रावरुणः । मित्रावरुणदेवतोऽपि तृच एव । मित्रं हुवे आह्वयाम्यहम् । कीदृशं, पूतदक्षम् । दक्ष इति सकारान्तं बलनाम पठितम् । अकारान्तमपि तु तस्यैव पर्यायान्तरं द्रष्टव्यम् । पूतं शुद्धम् अपगतदोषं बलं यस्य स पूतदक्षः । तं पूतदक्षम् । नच केवलं मित्रं, किंतर्हि, वरुणं च । कीदृशं रिशादसम् । रिशिर्हिंसार्थः । 'असु क्षेपणे' । रिशतोऽस्यतीति रिशादसः । रिशदास इति प्राप्ते छान्दसो ह्रस्वदीर्घव्यत्ययः । तं रिशादसं । हिंसकान् क्षेप्तारम् । प्रतिहिंसितारमित्यर्थः । एवमर्धर्चो विभक्तस्तुतिः । परस्तु सहस्तुतिः । धियम् । वृष्ट्याख्यं कर्म धीः, ताम् । घृताचीम् । घृतमित्युदकनाम । अञ्चतिर्गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । उदकं पृथिवीं प्रति या गमयति, सा घृताची, ताम् । साधन्ता साधयन्तौ वृष्टिं कुर्वन्तावित्यर्थः ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

मित्रं हुवे । मित्रं ह्वयामि शुद्धबलं वरुणं च रिशतां हिंसितॄणां क्षेप्तारम् । उदकाभिमुखं कर्म साधयन्तौ वृष्टेरीश्वरौ । 'अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षती'ति ब्राह्मणम् ॥ ७ ॥

ऋतेनमित्रावरुणावृतावृधावृतस्पृशा ।
क्रतुंबृहन्तमाशाथे ॥ ८ ॥

ऋतेन । मित्रावरुणौ । ऋतऽवृधौ । ऋतऽस्पृशा । क्रतुम् ।
बृहन्तम् । आशाथे इति ॥ ८ ॥

## स्कन्दस्वामीयम् ।

ऋतेनेति हेतौ तृतीया, यज्ञेन हेतुना । यस्मान्मनुष्यैरिज्येथे, तस्माद् हे मित्रावरुणौ! ऋतावृधौ यज्ञेन वर्धितारौ । यज्ञे हि यद्धविस्तदुपभुञ्जानाः स्तूयमानाश्च देवता वीर्येण वर्धन्ते तदायत्तत्वात् तासां स्थितेः । अथवा वृ(द्धि? धि)रत्रान्तर्णीतण्यर्थः । ऋतशब्दोऽपि यज्ञनामैव उदकनाम वा । यज्ञस्योदकस्य

वा वर्धयितारावित्यर्थः । अथवा ऋतमिति सत्यनाम । सत्यस्य स्तोतुर्यजमानस्य[1] वा वर्धयितारौ[2]वित्यर्थो वा । ऋतस्पृशौ यज्ञस्योपभोगकाले स्प्रष्टारौ । यज्ञे[3] हविषां प्रतिग्रहीतारावित्यर्थः । अथवा ऋतस्य सत्यस्य स्तोत्रस्य स्प्रष्टारौ श्रोतारावित्यर्थः । अथवा ऋतस्योदकस्य वृष्टिकाले स्प्रष्टारौ वर्षितारावित्यर्थः । क्रतुं कर्म । बृहन्तं महत् । आशाथे व्याप्नुथः कुरुथ इत्यर्थः । अथवा ऋतेनेत्ययमृतशब्द उदकनाम । करणे च तृतीया । उदकेन क्रतुं कर्म यज्ञाख्यं व्याप्नुथः । यत्र यज्ञस्तस्मिन् विषये वर्षथ इत्यर्थः ॥ ८ ॥

### वेङ्कटमाधवीयम् ।

ऋतेन मित्रावरुणौ । सत्येनैव मित्रावरुणौ सत्यस्य वर्धयितारौ सत्यस्य स्प्रष्टारौ यज्ञं महान्तमा[4]शाथे ॥ ८ ॥

कवीनोमित्रावरुणातुविजाताउरुक्षया ।
दक्षंदधातेअपसम् ॥ ९ ॥

कवी इति । नः । मित्रावरुणा । तुविऽजातौ । उरुऽक्षया ।
दक्षम् । दधाते इति । अपसम् ॥ ९ ॥

### स्कन्दस्वामीयम् ।

कवी मेधाविनौ । नः । तादर्थ्ये एषा चतुर्थी । अस्माकमर्थम् । मित्रावरुणा । द्विवचनस्यायमाकारः । मित्रावरुणौ । तुविजातौ । तुवीति बहुनाम । बहूनामर्थाय जातौ तुविजातौ । सर्वेषां प्राणिनामुपकर्तुमुत्पन्नावित्यर्थः । जननं जातं जन्मोच्यते । बहूनि जन्मानि ययोस्तौ तुविजातौ । यच्चानयोः कर्मात्मना पुनःपुनर्जन्म तदपेक्षया जन्मबहुत्वम् । उरुक्षया । उर्वीति बहुनाम । विस्तीर्णपर्यायो वा । बहुनिवासौ, विस्तीर्णनिवासौ वा । दक्षं बलं सेनालक्षणम् । द(ध?धा)ते धारयतः । अपसं कर्म च । अप(सम्) इतिहि कर्मनाम । अस्मदर्थं स्वसेनां पुष्णीतः, तया च वृष्ट्यादिकर्म कुरुतः । अथवा न इति सम्प्रदाने चतुर्थी । दधातिरपि दानार्थः । अस्मभ्यं बलं यागादिकर्म च दत्त(मि?इ)त्यर्थः ॥ ९ ॥

---

१. 'स्य व' क. पाठः. २. 'रौ ऋ', ३. 'ज्ञेन ह', ४. 'मानशा', ५. 'कम् । मि', ६. 'तम् । ' ख. पाठः.

वेङ्कटमाधवीयम् ।

कवी नः । क्रान्तदर्शिनौ[1] मित्रावरुणावस्मभ्यमहोरात्रयोः प्रादुर्भावादनेकजन्मानौ बहु(दिव[2] ? निवा)सावनेकयज्ञौ (वा) बलं प्रयच्छतो वेशं[3] च ॥ ९ ॥

इति प्रथमस्य प्रथमे चतुर्थो वर्गः ॥

---

अश्विनायज्वरीरिषोद्रवत्पाणीशुभस्पती ।
पुरुभुजाचनस्यतम् ॥ १ ॥

अश्विना । यज्वरीः । इषः । द्रवत्पाणी इति द्रवत्ऽपाणी । शुभः । पती इति । पुरुऽभुजा । चनस्यतम् ॥ १ ॥

स्कन्दस्वामीयम् ।

अश्विदेवतोऽपि तृच एव । हे अश्विना! । यज्वरीः । करणस्येयं कर्तृत्वेन विवक्षा । इज्यते याभिस्ता यज्वरीः । इषः हविर्लक्षणान्यन्नानि । (हे?) द्रवत्पाणी क्षिप्रहस्तौ, शीघ्रकारिणावित्यर्थः । शुभस्पती । शुभमित्युदकनाम । तस्याधिपती । पुरुभुजा बहूनां हविषां भोक्तारौ । चनस्यतम् । चन इत्यन्ननाम । तदिच्छ(न्तं ? तं) चनस्यतम् । इच्छया चात्र तत्पूर्वकं भक्षणं लक्ष्यते । अस्मदीयानि हवींषि भक्षयतमित्यर्थः ॥ १ ॥

वेङ्कटमाधवीयम् ।

प्रउगतृचानां मध्ये सूक्तविच्छेदो दक्षं दधाते अपजमित्यभिमताशासना[4]दित्याहुः[5] अर्थमिच्छन्तो हि सूक्तैः[6] स्तुवन्ति देवता इति ।

अश्वि(नौ ? ना) । यजमानस्य यष्टर्यन्नादि[7] क्षिप्रहस्तावुदकस्येश्वरौ बहुभोजनौ चनस्यतं चनोऽन्नं तदिच्छतम् । इह मन्त्रस्थस्य[8](?) कर्म पदान्तरेण पृथग् वक्तुं[9] निर्देशः समानशब्दैरनेकत्र भवति । गवां गोपतिः, सोमं सोमपातमा[10], द्रविणोदा द्रविणः[11] इति[12] । इहतु समानार्थेनैष[13] चनस्यतमिति ॥ १ ॥

अश्विनापुरुदंससानराशवीरयाधिया ।
धिष्ण्यावनतंगिरः ॥ २ ॥

---

१. 'शिं', २. 'वासानौ अनें' ख. पाठः. ३. 'शम्' क. पाठः. ४. 'नानादि', ५. 'ह्यर्थे', ६. 'क्तै' ख. पाठः. ७. 'ष्ट्रण्यन्नादनीक्षि', ८. 'न्त्र' क. पाठः. ९. 'क्तुनि' ख. पाठः. १०. 'मं', ११. 'द्राविणोदस' क. पाठः. १२. 'त्येवमादि । हेतु', १३. 'च' ख. पाठः.

**अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया । धिष्ण्या । वनतम् । गिरः ॥ २ ॥**

स्कन्दस्वामीयम् ।

पुरुदंससा । दंस इति कर्मनाम । बहुकर्माणावित्यर्थः । नरा मनुष्याकृती । शवीरया । शु इति क्षिप्रनाम । ईर गतौ । क्षिप्रमीरणं गमनं शवीरम् । अथवा, शव इति बलनाम । परबलस्य प्रेरणमपनोदः शवीरः । तेन यौ यातः गच्छतः तौ । शीघ्रगामिनौ परबलापनोदगामिना(वि)वेत्यर्थः । अथवा, अनवग्रहत्वात् पदस्य याशब्दो विभक्तेरादेशो, न याते रूपम् । शवीरशब्दस्तु पूर्ववत् कर्तृसाधन(स्तु ? :) । शीघ्रगामिनौ परबलस्य प्रेरयिता(रावि)वेत्यर्थः । शवतेर्वा गत्यर्थस्य शवीरशब्दः । यज्ञान् शत्रून् वा प्रतिगन्तारावित्यर्थः । धिया प्रज्ञया चित्तेन । महतादरेणेत्यर्थः । धिष्ण्या । धिषणेति वाङ्नाम । तस्याः पुत्रौ धिष्ण्यौ । अपत्ये यत्प्रत्ययो द्रष्टव्यः । अथवा धीरिति प्रज्ञानाम । ष्णै वेष्टने । धीः वेष्टयित्री सर्वार्थग्रहणसम(र्थौ ? र्था) ययोस्तौ धिष्णौ । धिष्णावेव धिष्ण्यौ । अत्यन्तप्रज्ञावित्यर्थः । वनतम् । वन षण सम्भक्तौ । सम्भजतम् । गिरः अस्मदीयाः स्तुतिलक्षणा वाचः ॥ २ ॥

वेङ्कटमाधवीयम् ।

अश्विना पुरुदंससा । अश्विनावाश्चर्यभूतविविधकर्माणौ[१] नेतारौ क्षिप्रमुपद्रुतं प्रति गमनं यस्यास्तया धिया कर्मणा धिष्ण्या धिषणार्हौ. धिषणा वाक्, स्तोतव्यौ भजेथां स्तुतीः ॥ २ ॥

**दस्रायुवाकवःसुतानासत्यावृक्तबर्हिषः ।**
**आयातंरुद्रवर्तनी ॥ ३ ॥**

**दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः । आ । यातम् । रुद्रवर्तनी इति रुद्रऽवर्तनी ॥ ३ ॥**

स्कन्दस्वामीयम् ।

हे दस्रा! दस्रनामानौ । यद्यपि चाश्विनोरेको दस्रनामा, नासत्यनामापरः, तथापि द्विवचननिर्देशादन्यतरनिर्देशेनापि सर्वत्र साहचर्यादुभयोः प्रतिपादनम् । क्रियाशब्दविज्ञानं वा । तसु उपक्षये दसु चेत्येतस्य, दसि[२] दर्शन-

१. 'र्मणो ने', २. 'दंसिदर्शनयोः' ख. पाठः.

दंशनयोरित्येतस्य वा दस्रौ । उपक्ष(प)यितारौ शत्रूणां, दर्शनीयौ वेत्यर्थः । युवाकवः युवां कामयन्त इति युवाकवः । कर्मेर्ङ्प्रत्य(यादौ ? य औ)णादिकः यु(व ? वे)त्यपि च प्रत्ययलक्षणे युष्मदो युवादेशः । युष्मत्पानकामा इ(ति ?)-वेत्यर्थः । के, सुताः सोमाः । अथवा, यु मिश्रण इत्यस्य युवाकवः । मिश्रिताः । केन, सामर्थ्याद् वसतीवर्यैकधनादिभिरद्भिः श्रयणैर्वा । सुता अभिषुताश्च सोमाः । हे नासत्या! नासत्यनामानौ । अन्यतरनाम्ना चेदं साह-चर्यादुभयप्रतिपादनम् । न वा असत्यौ । द्वौ प्रतिषेधौ प्रकृतिं गमयतः । स-त्यावेव । वृक्तबर्हिषः सोमाः । भवदुपवेशनार्थं बर्हिर्वेद्यां स्तीर्णमित्यर्थः । एतद् ज्ञात्वा आयातम् आगच्छतम् । हे रुद्रवर्तनी! । रुदे रौतेर्वा रुद्रा । शब्दय(ती ? न्ती) वर्तनी गमनमार्गौ ययोस्तौ रुद्रवर्तनी । यतोयतः शत्रुशब्दः, ततस्ततो गन्तारौ । स्वयं पथि गच्छन्तौ शब्दस्य कर्तारावित्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

दस्रा युवाकवः । दर्शनीयौ! युष्मत्पानकामाः सोमाः । सत्यावेव नासत्या-विश्वौर्णवाभः । सत्यस्य प्रणेतारावित्याग्रायणः । वृक्तबर्हिषः सोमाः स्मरणार्थं छिन्न-बर्हिषः । आगच्छतं युद्धे घोरगमनमार्गौ ॥ ३ ॥

इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।

अण्वीभिस्तना पूतासः ॥ ४ ॥

इन्द्र । आ । याहि । चित्रभानो इति चित्रऽभानो । सुताः । इमे । त्वाऽयवः । अण्वीभिः । तना । पूतासः ॥ ४ ॥

स्कन्दस्वामीयम् ।

ऐन्द्रोऽयं पञ्चमस्तृचः । योऽयं पञ्चमस्तृचः, स इन्द्रदेवतः । हे इन्द्र! आयाहि आगच्छ । चित्रभानो! । भानुर्दीप्तिः । विचित्रदीप्ते!, पूज-नीयदीप्ते! वा । किंकारणं, सुता अभिषुता इमे सोमाः । त्वायवः त्वत्कामाः । अभिषु(तां ? तान्) अपिनामेन्द्रोऽस्मान् पिबेदित्येवंकामा इत्यर्थः । नचाभिषुता एव केवलं, किन्तर्हि, अण्वीभिस्तना पूतासः । अण्व्य इत्यङ्गुलीनाम । 'वारेण शश्वतातना तना पुनान आयुःष्वि'त्यादिदर्शनात् तनाशब्दो दशापवित्र-वचनः । अण्वीभिर्दशापवित्रेण च पूताः । हस्तेन दशापवित्रमादाय पूता अपीत्यर्थः ॥ ४ ॥

---

१. 'ताः' क. पाठः. २. 'पा' ख. पाठः.

वेङ्कटमाधवीयम् ।

इन्द्रायाहि । इन्द्रोऽ[1]गच्छ कर्मणा चित्रदीप्ते! सुता[2] इमे सोमास्त्वत्कामा भवन्ति। अङ्गुलीभिर्दशापवित्रेण च पूताः ॥ ४ ॥

इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः ।

उपब्रह्माणिवाघतः ॥ ५ ॥

इन्द्र । आ । याहि । धिया । इषितः । विप्रऽजूतः । सुतऽवतः । उप । ब्रह्माणि । वाघतः ॥ ५ ॥

स्कन्दस्वामीयम् ।

हे इन्द्र! आयाहि आगच्छ । धिया अस्मदीयया प्रज्ञया । इषितः । शुद्धोऽप्ययमिषिरधिपूर्वार्थो द्रष्टव्यः । अधीष्टः अभ्यर्थित इत्यर्थः । विप्रजूतः । विप्र इति मेधाविनाम । जूतिर्गत्यर्थः । केवलोऽपिच सोपसर्गार्थः । मेधाविभिऋत्विग्भिरभिगतः । केन, सामर्थ्यात् स्तुतिभिः । मयाभ्यर्थितोऽन्यैश्चर्त्विग्भिरभिष्टुत इत्यर्थः । कागच्छानि, उच्यते । सुतावतः । सुताः सोमा यस्य सन्ति स सुतावान् यजमानः, तस्य । उप ब्रह्माणि । उपशब्दः सामीप्ये । ब्रह्मेत्यन्ननाम । यजमानस्य स्वभूतानामन्नानां, हविर्लक्षणानामन्नानां समीप इत्यर्थः । वाघतः । ऋत्विङ्नामैतत् । इहतु सुतावतो यजमानस्य विशेषणत्वादन्तर्णीतमत्वर्थः ऋत्विग्वतो यजमानस्येति । अथवा, वाघत इत्येतस्यैव सुतावत इत्येतद् विशेषणम् । ब्रह्मशब्दश्च स्तुतिवचनः । सुतावतः कृतसोमाभिषवस्य ऋत्विजो याः स्तुतयः, तत्समीपे । यत्र सोममभिषुत्यर्त्विजः स्तुवन्तीत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

इन्द्रायाहि । इन्द्रा[3]गच्छ कर्मणा प्रेषितो मेधाविभिराकृष्टो यजमानस्य यो होता तस्य स्तोत्राणि[4] ॥ ५ ॥

इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः ।

सुतेदधिष्वनश्चनः ॥ ६ ॥

इन्द्र । आ । याहि । तूतुजानः । उप । ब्रह्माणि । हरिऽवः । सुते । दधिष्व । नः । चनः ॥ ६ ॥

---

१. 'न्द्रागच्छ चि', २. 'न्तु', ३. 'न्द्रो याग', ४. 'स्य स्तोतुः तस्य स्तो' ख. पाठः.

## स्कन्दस्वामीयम् ।

हे इन्द्र! आयाहि । तूतुजानः । क्षिप्रनामैतत् । क्षिप्रं, त्वरमाण इत्यर्थः । उप ब्रह्माणि । हे हरिवः! । हरी अश्वौ, तद्वन्! । आगत्य च । सुते इति द्वितीयार्थे सप्तम्येषा । सुतम् अभिषुतम् । दधिष्व धारय स्वोदरे । पिबेत्यर्थः । नः अस्माकं स्वभूतं चनः सोमलक्षणमन्नम् ॥ ६ ॥

## वेङ्कटमाधवीयम् ।

इन्द्रायाहि । इन्द्रोपगच्छ त्वरमाणः स्तोत्राणि [illegible]भूताश्ववन्! आगत्य चास्मिन् सुते सोमेऽस्मभ्यमन्नं देहि ॥ ६ ॥

इति प्रथमस्य प्रथमे पञ्चमो वर्गः ॥

---

ओमा॑सश्चर्षणीधृतो॒विश्वे॑दे॒वास॒आग॑त ।

दा॒श्वांसो॑दा॒शुषः॑सु॒तम् ॥ ७ ॥

ओमा॑सः । च॒र्ष॒णि॒ऽधृ॒तः॒ । विश्वे॑ । दे॒वा॒सः॒ । आ । ग॒त॒ । दा॒श्वांसः॑ । दा॒शुषः॑ । सु॒तम् ॥ ७ ॥

## स्कन्दस्वामीयम् ।

वैश्वदेवस्तृचः षष्ठः । हे ओमासः! । अवतेरयं पालनार्थस्य तर्पणार्थस्य वा कर्तरि माङ्प्रत्ययः । अवितारः रक्षितारः, तर्पयितारो वा । चर्षणीधृतः । चर्षणयो मनुष्याः, तेषां तैस्तैरुपकारैर्धारयितारः । विश्वे सर्वे । देवासो देवाः । आगत आगच्छत । दाश्वांसः । प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यतां नेयम् । ये दाश्वांसो दत्तवन्तो यजमाना(य) धनानि ते । दाशुषो हवींषि दत्तव(न्तः? तः) । अप्रतिहतगमनशक्तय इत्यर्थः(?) । अथवा, यजमानस्य स्वभूतं सुतं सोमं प्रति ॥ ७ ॥

१. 'वा...तुशब्दे अग्त' क. पाठः.

वेङ्कटमाधवीयम्।

सोमासः। अवितारो मनुष्यधृतः सर्वे देवा इहागच्छत दानशीला दाशुषः सुतम् ॥ ७ ॥

विश्वेदेवासोअप्तुरःसुतमागन्ततूर्णयः।

उस्राइवस्वसराणि ॥ ८ ॥

विश्वे। देवासः। अप्ऽतुरः। सुतम्। आ। गन्त। तूर्णयः। उस्राःऽइव। स्वसराणि ॥ ८ ॥

स्कन्दस्वामीयम्।

विश्वेदेवासः हे विश्वेदेवाः!। अप्तुरः। अप्छब्द उदकवचनः। अन्तर्णीतण्यर्थस्य तरतेरप्तुरः। अपां तारयितारः आदित्यं प्रति गमयितारः। रश्मयो हि नैरुक्तानां विश्वेदेवाः। ते च रसानामादातारः। अथवा, आप्लृ व्याप्तावित्येतस्य तृजन्तस्य षष्ठ्येकवचन एतद् रूपम्। स्तुतिभिश्च हविर्भिश्च देवतानामाप्तुर्यजमानस्य स्वभूतं सुतं सोममागन्त। व्यत्ययेनात्र मध्यमपुरुषः। आगच्छन्तु। आगन्तेति वा मध्यमपुरुषः श्रुतिसामर्थ्यात्। विश्वेदेवासो अप्तुर इत्येतौ व्यत्ययेनामन्त्रितप्रथमौ व्याख्यातव्यौ। हे विश्वेदेवाः! अप्तुरः! यूयमागच्छतेति। तूर्णयः। क्षिप्रनामैतत्। क्षिप्राः। कथम्। उस्रा इव स्वसराणि। उस्रा इति गोनाम, रश्मिनाम वा। स्वसराणीत्यहर्नाम। यथा (दा? दो)-हार्थं गावः समस्ता रश्मयो वा अहानि प्रत्यागच्छन्ति, तद्वत् समस्ता आगच्छतेत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम्।

विश्वेदेवासः। विश्वेदेवा मेघस्थानामपां तूर्णयितारः क्षिप्राः सुतमागच्छत सर्वे ये सरन्ति रश्मय इवाहानि यद्वा गोष्ठानीव गावः ॥ ८ ॥

विश्वेदेवासोअस्रिधएहिमायासोअद्रुहः।

मेधंजुषन्तवह्नयः ॥ ९ ॥

विश्वे। देवासः। अस्रिधः। एहिऽमायासः। अद्रुहः। मेधम्। जुषन्त। वह्नयः ॥ ९ ॥

---

१. 'नः अन्तर्णीतण्य(र्थ)शब्दे अ', २. 'रः अप्रतिहतगमनशक्तय इत्यर्थः। अ' ख० पाठः.

स्कन्दस्वामीयम् ।

विश्वेदेवासः । विश्वेदेवाः । अस्त्रिधः । न स जीयते मरुतो न हन्यत इति दर्शनात् स्त्रिधः क्षयार्थः शोषणार्थो वा । अक्षया अशोषयितारो वा । एहिमायासः । सौचीकमग्निमप्सु प्रविष्टमेहिमायासीरिति यदवोचत्, तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेशः एहिमायास इति । अथवा, अहीनमाया एहिमायासः । अन्यूनप्रतिज्ञाना इत्यर्थः । अद्रुहः अद्रोग्धारो यजमानानाम् । मेधं यज्ञम् अस्मदीयम् । जुषन्त सेवन्ताम् । वह्नयः वोढारः । धनानां दातार इत्यर्थः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

विश्वेदेवासः । विश्वेदेवाः क्षयरहिताः स्तोतारमेहि मायासीरिति वदन्तो द्रोहरहिता यज्ञमसेवन्त वोढारः ॥ ९ ॥

पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥ १० ॥

पावका । नः । सरस्वती । वाजेभिः । वाजिनीऽवती । यज्ञम् । वष्टु । धियाऽवसुः ॥ १० ॥

स्कन्दस्वामीयम् ।

सारस्वतोऽयं सप्तमस्तृचः । सरस्वतीदेवतोऽयम् । पावका शोधयित्री । (तम्?) अंहसां पापानामपनेत्री । अथवा पव(तीरक्ष? तिः क्षारणा)णार्थः । सोमःपवतेजनितामतीनामिति । ण्यन्तश्चात्र द्रष्टव्यः । क्षारयित्र्युदकानाम् । नः अस्माकं । स्वभूतम् । सरस्वती प्रथमस्थानवाक् । कीदृशी, वाजेभिर्वाजिनीवती । वाज इत्यन्ननाम । वाजिनीशब्दोऽपि तस्यैव पर्यायान्तरं द्रष्टव्यम् । यजमानेभ्यो यानि ददाति, तैर्हविर्लक्षणैश्चान्नैरन्नवती । अथवा, वाजेभिरिति तृतीयानिर्देशाद् युक्तमिति वाक्यशेषः । हविर्लक्षणैरन्नैर्युक्तम्[2] । वाजिनीवती । वाजो बलं वेगो वा, तद्वती वाजिनी(वती?)[3] । कासौ सरस्वत्याः स्वभूता सेना । तद्वती वाजिनीवती । सरस्वती । अथवा, वाजो हविर्लक्षणमन्नं, तद् य(स्यास्ति? स्या अस्ति) सा वाजिनी(वती?) यागसन्ततिः । तद्वती वाजिनीवती । सरस्वती । यज्ञं वष्टु । वश कान्तौ । कामयताम् । कामनेना(त्र? त्रा)गमनं संभजनं च

१. 'क्षणैः पानैर', २. 'नैर्यु' ख. पाठः. ३. 'ती । स' क. पाठः.

लक्ष्यते । यो हि यं कामयते, स त(दा ? मा)गच्छति, सम्भजति च । आगच्छतु, सम्भजतां चेत्यर्थः । धियावसुः प्रज्ञाधना । अथवा, वसेराच्छादनार्थस्य वसुशब्दः । प्रज्ञया छादयित्री सर्वार्थानाम् ॥ १० ॥

वेङ्कटमाधवीयम् ।

पावका नः । शोधयित्र्यस्माकं सरस्वत्यन्नैरन्नवती यज्ञं वहतु कामयतां ना प्रज्ञया सर्वेषां वासयित्री ॥ १० ॥

चोदयित्रीसूनृतानांचेतन्तीसुमतीनाम् ।
यज्ञंदधेसरस्वती ॥ ११ ॥

चोदयित्री । सूनृतानाम् । चेतन्ती । सुऽमतीनाम् । यज्ञम् । दधे । सरस्वती ॥ ११ ॥

स्कन्दस्वामीयम् ।

चोदयित्री सूनृतानाम् । अपठितमपि वाङ्नामैतत् । मध्यमस्थाना हि सरस्वती । सा च गर्जितलक्षणां वाचं चोदयित्री । चेतन्ती जान(न्ती ? ती) । सुमतीनाम् । द्वितीयार्थे षष्ठीयम् । सुमतीन् भक्तिपरान् यजमानान् । यज्ञं दधे धारयति सरस्वती । भूयिष्ठस्य यज्ञस्य मन्त्रलक्षणवागायत्तत्वात्, तस्याश्च सरस्वत्यायत्तत्वात् ॥ ११ ॥

वेङ्कटमाधवीयम् ।

चोदयित्री । चोदयित्री सत्यानां प्रज्ञापयन्त्युदाराणां सुमतीनां यज्ञं धारयित्री सरस्वती मन्त्रभूता ॥ ११ ॥

महोअर्णःसरस्वतीप्रचेतयतिकेतुना ।
धियोविश्वाविराजति ॥ १२ ॥

महः । अर्णः । सरस्वती । प्र । चेतयति । केतुना । धियः । विश्वाः । वि । राजति ॥ १२ ॥

स्कन्दस्वामीयम् ।

महो म(हं ? हद्) बहु । अर्णो मेघस्थमुदकम् । सरस्वती प्रचेतयति प्रज्ञापयति । केतुना कर्मणा गर्जनाख्येन । गम्भीरं हि गर्जितं श्रुत्वा महदत्र मेघ उदकमित्यवगम्यते । केतुशब्दोऽपठितोऽपि कर्मनामापि, न प्रज्ञानामैव ।

'चा' ख. पाठः. २. 'द', ३. 'यन्ती स' क. पाठः. ४. 'श' ख. पाठः.

कुत एतत् । 'वैश्वानरस्य विमितानि चक्षसे'त्यत्र प्रयोगदर्शनात् । अत्रहि चक्षसेत्यनेन प्र(ज्ञ? ज्ञा)या उपात्तत्वादसन्दिग्धं केतुशब्दस्य (प्रज्ञा)वचनत्वम् । किञ्च धियः कर्माणि प्रज्ञा वा विश्वाः सर्वा विराजति । राजतिर्दीप्त्यर्थः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । विविधं दीपयति । वाग्घि सरस्वती । सा च यागकर्माणि प्रज्ञा वा दीपयति वृष्टिद्वारेण । (वा अथा? अथवा)धियो विश्वा इति षष्ठ्यर्थे द्वितीया । राजतिरप्यैश्वर्यकर्मा । कर्मणां प्रज्ञानां वा सर्वासां विविधमीष्ट इत्यर्थः ॥ १२ ॥

वेङ्कटमाधवीयम् ।

महो अर्णः । महदुदकं सरस्वती मध्यमस्थाना प्रज्ञापयति कर्मणा सर्वाणि च कर्माणि राजयति ॥ १२ ॥

इति प्रथमस्य प्रथमे षष्ठो वर्गः ॥

इति प्रथमे मण्डले प्रथमोऽनुवाकः ।

---

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।

जुहूमसि द्यविद्यवि ॥ १ ॥

सुरूपकृत्नुम् । ऊतये । सुदुघाम्ऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ १ ॥

स्कन्दस्वामीयम् ।

सुरूपकृत्नुमित्यैन्द्रमा मेधातिथेः स्मृतम् । सुरूपकृत्नुमित्यत आरभ्य ऐन्द्रदैवतमा मेधातिथेरार्षात् । सुरूपाणि शोभनानि कर्माणि, तेषां कर्तारम् इन्द्रम् । ऊतये सोमेन तर्पणाय । पालनाय वा आत्मनः सुदुघामिव गोदुहे । यथा कश्चित् सुदोहां गां तस्या एव गोर्दोहायाह्वयेत्, तद्वत् । जुहूमसि आह्वयामः । द्यविद्यवि अहन्यहनि । सततमित्यर्थः ॥ १ ॥

वेङ्कटमाधवीयम् ।

सुरूपकृत्नुम् । सुरूपाणां कर्मणां कर्तारं रक्षणाय सुदो[1]हामिव धेनुं त[2]स्या एव दोहार्थमाह्वयामोऽन्वहम् ॥ १ ॥

उप नः सवना गहि सोमस्य सोमपाः पिब ।

गोदा इद्रेवतो मदः ॥ २ ॥

---

१. 'दु' क. पाठः. २. 'तामिव' ख. पाठः.

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब ।
गोऽदाः । इत् । रेवतः । मदः ॥ २ ॥

स्कन्दस्वामीयम् ।

उपेत्युपसर्गः आगहीत्याख्यातेन सम्बध्यते । उपागहि उपागच्छ । नः अस्माकं स्वभूतानि सवनानि प्रातस्सवनमाध्यन्दिनतृतीयसवनानि । यज्ञनाम वा सवनशब्दः । यज्ञान् । उपागत्य च, सोमस्य, द्वितीयार्थे षष्ठी । (षष्ठी) श्रुतेर्वैकदेशमिति शेषः । सोमं सोमस्य वैकदेशं स्वांशलक्षणं वा । हे सोमपाः! सोमानां पातः! । पिब । किंकारणम्, उच्यते । गोदा इत् । इच्छब्दः पदपूरणः, यस्मादर्थे वा । गवां दाता यस्माद् रेवतः धनवतः तव मदः । यस्मात् त्वं सोमेन मत्तो गा ददासीत्यर्थः ॥ २ ॥

वेङ्कटमाधवीयम् ।

उपनः । उपागच्छास्माकं सवनानि सोमं च सोमपातः ! पिबाथ परं तत्(?) गोदा एव भवत्याश्रितस्याढ्यः । मदस्तृप्त आढ्यः प्रयच्छति पशूनीति ॥ २ ॥

अथातेअन्तमानांविद्यामसुमतीनाम् ।
मानोअतिख्यआगहि ॥ ३ ॥

अथ । ते । अन्तमानाम् । विद्याम । सुऽमतीनाम् ।
मा । नः । अति । ख्यः । आ । गहि ॥ ३ ॥

स्कन्दस्वामीयम् ।

अथेत्या(न)न्तर्ये[१] । अथ सोमपानानन्तरम् । ते तव । अन्तमानां द्वितीयार्थे षष्ठीयम् । अन्तमान् सन्निकृष्टान् । विद्याम । विद ज्ञाने । जानीयामि ? मे । कीदृशान् । सुमतीन् त्वद्भक्तिप्रज्ञोपेतान् । तव स्वयमपि सन्निकृष्टः इन्द्र! (कृष्टान्?) सन्निकृष्टान् ज्ञातुमलमिति स्वसन्निकर्षोऽनेन प्रकारेणाशास्यते । अथवा, अन्तमानां सुमतीनामिति निर्धारणे षष्ठी । तव सन्निकृष्टानां सुमतीनां मध्ये विद्याम । विद सत्तायाम् । वयमपि भवेमेत्याशास्महे । अथवा, विदिर्लाभ इत्येतस्यैतद् रूपम् । तव यानि सन्निकृष्टानि सुमतीनि मतिः स्तुतिर्मन्यतेरर्चतिकर्मत्वात् सुस्तुतीनि सुपूजितानि अत्यन्तोत्कृष्टानि धनानि, तानि,

---

१. 'थानन्त' ख. पाठः.

तेषां वैकदेशं लभेमहि । किञ्च, मा नो अतिख्यः । अतिपूर्वोऽत्र ख्यातिः सामर्थ्यात् परित्यागेऽतिक्रमे *वा । प्रथने(ना ? मा)स्मान् कदाचिदपि परित्याक्षीः, अतिक्रमीर्वा । किन्तर्हि, सर्वदैवागच्छ । अथवा ख्यातिः प्रथनार्थ एव । न इति कर्मश्रुतेः, अतीति चोपसर्गाद् योग्यक्रियाध्याहारः (?) । मास्मानतिख्यः अन्येभ्यः प्रकाशीभूः । अन्यसकाशं मा गमोऽस्मत्समीपमेवागच्छेत्यर्थः ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

अथाते । सन्ति तव सन्निकृष्टास्त्वयि विद्यमानाः सुमतीर्वयं लभेमहि । सर्वेणाभ्युदयेनार्थं युक्तोऽस्मिन्नेव मतिः सुमतिः । मास्मान् अपहायान्यान् द्राक्षीरिहागच्छ ॥ ३ ॥

**परेहि विग्रमस्तृतमिन्द्रं पृच्छा विपश्चितम् ।**
**यस्ते सखिभ्य आ वरम् ॥ ४ ॥**

परा । इहि । विग्रम् । अस्तृतम् । इन्द्रम् । पृच्छ । विपःऽचितम् । यः । ते । सखिऽभ्यः । आ । वरम् ॥ ४ ॥

## स्कन्दस्वामीयम् ।

आत्मन एवान्तरात्मनः प्रैषः । हे अन्तरात्मन्! परागच्छ । कीदृशं, विग्रम् । मेधाविनामैतत् । मेधाविनम् । अस्तृतम् । स्तृञ् छादने हिंसायां वा । अनाच्छादितं सर्वप्रका(रं ? शम्) अहिंसितं वा । कम्, इन्द्रम् । इन्द्रसकाशं गच्छेत्यर्थः । गत्वा च पृच्छ । (किं ? कं), विपश्चितम् । एतदपि मेधाविनामैव । विग्रमिति पौनरुक्त्यप्रसङ्गान्नेदमिन्द्रविशेषणं, (किं) तर्हि, स्तोतृप्रतिनिर्देशः । मेधाविनं स्तोतारम् । कतमोऽसौ पुमानत्यन्तमेधावी स्तोता यस्य त्वं सम्यक् स्तुतिं शृणोषि इत्येतद् गत्वा इन्द्रं पृच्छेत्यर्थः । (पृच्छ)या किं करोति, इन्द्रं पृच्छेत्युच्यते । यस्ते तव सखिभ्यः सखिस्थानीयेभ्यः पुत्रपौत्रादिभ्यो वा । आ वरम् । आ इत्युपसर्गाद् वरं सखिभ्य इति च कर्मसम्प्रदानश्रुतेर्योग्यक्रियाध्याहारः । आदत्ते वरं ददाति । अभिलषितं ददातीत्यर्थः ॥ ४ ॥

---

१. 'सर्वाविति' क. पाठः.

---

* 'अतिक्रमे प्रथने वा' इति भाव्यम् ।

वेङ्कटमाधवीयम् ।

परेहि । स्तोतरितस्त्वमुपगच्छ । गत्वा च मेधाविनमहिंसितं शत्रुभिरिदं पृच्छ कीदृशः क स वर्तत इति । कंचन विपश्चितं पृच्छ । य इन्द्रस्तत्र पुत्रादिभ्यो वरणीयं धनमाप्रयच्छति ॥ ४ ॥

उतब्रुवन्तुनोनिदोनिरन्यतश्चिदारत ।
दधानाइन्द्रइद्दुवः ॥ ५ ॥
उत । ब्रुवन्तु । नः । निदः । निः । अन्यतः । चित् । आरत
दधानाः । इन्द्रे । इत् । दुवः ॥ ५ ॥

स्कन्दस्वामीयम् ।

उतशब्दः पदपूरणः । अप्यर्थे समुच्चये (वा उत्तर)स्यां च(व?)र्चि यद् वक्ष्यते, तदपेक्षः समुच्चयः । अपि ब्रुवन्तु उच्चारयन्तु । किं, सामर्थ्या-दिन्द्रस्य स्तुतीः । इन्द्रं नित्यं स्तुव(न्त ? ता)मित्यर्थः । नः अस्माकं स्वभूता ऋत्विजः पुत्रपौत्रादयो वा । निदः ये त्वस्माकं निन्दितारः, ते निरन्यतश्चि-दारत । चिच्छब्द एवार्थे । अन्यत एव निरारत निर्गच्छन्तु । अन्येनैव पथा प्रयान्तु । मा इन्द्रं कदाचिदपि तत्त्वतो ज्ञासिषुः, मा च (स्तो ? स्ताचि)षु-रित्यर्थः । दधाना इन्द्रे इद् दुवः । इच्छब्दः पदपूरणः । इन्द्रे परिचर्या (दधानाः) इन्द्रं परिचरि(न्तु ? तु)मिच्छन्त इत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

उत ब्रुवन्तु । अपि च कामं प्रत्यक्षमेवास्मत्स्थिरस्माकं निन्दितारो ब्रुवन्तु. निर्गच्छन्तु वान्यत । वयं त्विन्द्रे परिचर्यां दधाना न वि(भे ? भी)मः । इदिति पूरण-मित्यस्योत्तरा भूयसे निर्वचनाय ॥ ५ ॥

इति प्रथमस्य प्रथमे सप्तमो वर्गः ॥

उतनःसुभगाँअरिर्वोचेयुर्दस्मकृष्टयः ।
स्यामेदिन्द्रस्यशर्मणि ॥ ६ ॥

१. 'स्त', २. 'पा'. ३. 'च वि' क. पाठः. ४. 'गच्छतो वा' ख. पाठः, ५. 'न्तु तो वा' क. पाठः.

उत नः । सुऽभगान् । अरिः । वोचेयुः । दस्म । कृष्टयः । स्याम । इत् । इन्द्रस्य । शर्मणि ॥ ६ ॥

### स्कन्दस्वामीयम् ।

अपि नः अस्मान् सुभगान् सुधनान् । अरिः शत्रुपर्यायोऽयमीश्वरनाम वा । व्यत्ययेन चैकवचनम् । शत्रवोऽपि, ईश्वरा अपि । वोचेयुः । हे दस्म! उपक्षयितः शत्रूणां, दर्शनीय वा । कृष्टयः मनुष्याः । तादृशं धनमस्मभ्यं देहि, येन शत्रवोऽपि ईश्वरा अपि वा अस्मान् सुधनान् ब्रुवन्ति । किमुतान्ये मनुष्या इत्यर्थः । किञ्च स्यामेत् इच्छब्दः पदपूरणोऽयम् । भवेम । तवेन्द्रस्य सम्बन्धिनि शर्मणि सुखे त्वया दत्तेन धनेन सुखिनश्च भवेमेत्यर्थः । अथवा, शर्मेति गृहनाम । मरणोत्तरकालं तवेन्द्रस्य गृहे भवेम इन्द्रलोकं गच्छेमेत्यर्थः ॥ ६ ॥

### वेङ्कटमाधवीयम् ।

उत नः[1] । उत अरिः कृष्टय इत्येकवचनबहुवचनयोर्भिन्नपादस्थयोर्भिन्नमन्त्रस्थयोरिव विरस्याभिधानात् सामानाधिकरण्यं सिध्यति । अपिचास्मानिन्द्रसमाश्रयणात् सुभगानाहुरिति[2]। अरिर्विब्रवीतु ब्रुवन्तु चार्यो मनुष्या दर्शनीय ! । अथापि वयमिन्द्रस्य स्वभूते सुखे[3] स्यामैव ॥ ६ ॥

एमाशुमाशवे भर यज्ञश्रियं नृमादनम् ।
पतयन्मन्दयत्सखम् ॥ ७ ॥

आ । ईम् । आशुम् । आशवे । भर । यज्ञऽश्रियम् । नृऽमादनम् । पतयत् । मन्दयत्ऽसखम् ॥ ७ ॥

### स्कन्दस्वामीयम् ।

(ई ? ई)शब्द एनमित्यस्यार्थे । एनं सोमम् । आशुम् । क्षिप्रनामैतत् । स्वकार्यकरणेषु क्षिप्रम् । आशवे । तादर्थ्ये चैषा चतुर्थी । सर्वार्थेषु क्षिप्रस्येन्द्रस्यार्थाय । आभर आहर अध्वर्यो! यज्ञश्रियं यज्ञे यः श्रयति स यज्ञश्रीः, तं यज्ञश्रियं हविष्ट्वमापन्नमित्यर्थः । नृमादनं नरो मनुष्या ऋत्विजः, तदाकारा वा देवाः, तेषां मदकरम् । पतयत् पतयतिर्गतिकर्मा । द्वितीयैकवचनस्य च छान्द-

१. 'त इति उतनः अ' ख. पाठः. २. 'तधनान', ३. 'सुसले स्या' क.पाठः.

सत्वाल्लुक् । पतयन्तं गच्छन्तमिन्द्रं प्रति गन्तारमित्यर्थः । मन्दयत्सखम् । मन्दयतिरर्चतिकर्मा । तानि तान्यभिप्रेतानि स्तोतुः सम्पादयन् य आत्मनः स्तुतिं कारयति, इन्द्रस्य सखीभूतः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

एमाशुम् । आभर पुनं क्षिप्रव्यापिनं सोमं क्षिप्रव्यापिनं इन्द्राय यः सोमो यज्ञं श्रयति मदयति च मनुष्यान् तं पतयन्तं पातयति हि सोम । पातारं मदयति च सखायं पातैव सखेति ॥ ७ ॥

अस्यपीत्वाशतक्रतोघनोवृत्राणामभवः ।

प्रावोवाजेषुवाजिनम् ॥ ८ ॥

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणाम् । अभवः । प्र । आवः । वाजेषु वाजिनम् ॥ ८ ॥

स्कन्दस्वामीयम् ।

अस्येति षष्ठी द्वितीयार्थे । षष्ठीश्रुतेर्वैक(शेष ? देश)मिति शेषः । इमं सोमम्, अस्य सोमस्यैकदेशं स्वांशलक्षणं पीत्वा । हे शतक्रतो ! । शतशब्दो बहुनाम । क्रतुः कर्म प्रज्ञा वा । बहुकर्मन् ! बहुप्रज्ञ ! वा । घनः हन्ता । वृत्राणामसुराणामन्येषां वा अभवस्त्वं प्रावः प्रकर्षेणारक्षस्त्वम् । वाजेषु । वाज इत्येकवचनान्तं सङ्ग्रामपठितं, संग्रामेषु । कं, वाजिनं संग्रामवन्तं हविर्लक्षणेनान्नेनान्नवन्तम् । अथवा अभवः प्राव इति लोडर्थे लङ् । हन्तास्मदीयानां शत्रूणां भव । प्रकर्षेण चाव संग्रामेषु मां वाजिनमिति । आत्मत्राणे संसर्गे वा ब्राह्मणवैश्ययोरपि शस्त्रादानस्मरणात् सम्भवत्यृषीणामपि संग्रामः, विशेषेण तु मधुच्छन्दसः क्षत्रियप्रसूतत्वात् । तत्रेदं शत्रुहननमात्मरक्षा चाशास्यते ॥ ८ ॥

वेङ्कटमाधवीयम् ।

अस्य पीत्वा । अमुं पीत्वा सोमं पीत्वा शतप्रज्ञ ! हन्ता शत्रूणामभवः पालय च युद्धेषु युद्धवन्तं स्तोतारम् ॥ ८ ॥

तंत्वावाजेषुवाजिनंवाजयामःशतक्रतो ।

धनानामिन्द्रसातये ॥ ९ ॥

१. 'चैयति' ख. पाठः. २. 'स्तां', ३. 'त्वा शतक्रतो अ' क. पाठः. ४. 'प्राव(य ?)श्च यु' ख. पाठः.

तम्। त्वा। वाजेषु। वाजिनम्। वाजयामः। शतक्रतो इति शतऽक्रतो। धनानाम्। इन्द्र। सातये॥९॥

स्कन्दस्वामीयम्।

तच्छब्दः प्रकृतापेक्षः। तं त्वा वाजेषु वाजिनं वाजो बलं तद्वन्तम्। वाजयामः, वाजयतिरर्चतिकर्मा[1], स्तुमः। हे शतक्रतो! बहुकर्मन्! बहुप्रज्ञ[2]! वा। किमर्थम्, उच्यते। संग्रामे जिगीषितानां धनानां हे इन्द्र! सातये। षसु दाने। दानाय। अथवा वन षण सम्भक्तौ। सम्भजनाय लाभायेत्यर्थः॥९॥

वेङ्कटमाधवीयम्।

तं त्वा वाजेषु। तं त्वा युद्धेषु बलिनं स्तुतिभिर्बलिनं कुर्मः शतप्रज्ञ! धनानाम् इन्द्र! लाभाय॥९॥

योरायो३वनिर्महान्त्सुपारःसुन्वतः सखा।
तस्माइन्द्रायगायत॥१०॥

यः। रायः। अवनिः। महान्। सुऽपारः। सुन्वतः। सखा। तस्मै। इन्द्राय। गायत॥१०॥

स्कन्दस्वामीयम्।

य इन्द्रः (रायः) धनस्य। अवनिः। पृथिवीनामैतत्। आश्रयत्वसामान्यात्तु इन्द्रे प्रयुज्यते। यथा पृथिवी सर्वार्थानामाश्र(या?यः) तद्वदाश्रय इत्यर्थः। अथवा, अवतेः स्वाम्यर्थस्य वा, अवाप्त्यर्थस्य वा कर्तर्ययमनिप्रत्ययः। धनस्येशिता अवाप्ता वेत्यर्थः। कीदृशः, महान् सुपारः। पॄ पालनपूरणयोः। सुष्ठु च पालयिता। सुन्वतोऽभिषवं कुर्वतः, सोमयाजिन इत्यर्थः। सखा सखिस्थानीयश्च सुन्वत एव। तस्मा इन्द्राय, तादर्थ्ये एषा चतुर्थी, तस्येन्द्रस्यार्थाय। तमिन्द्रं स्तोतुमित्यर्थः। गायत सामगा! उद्गातारः!। उच्चारणवचनमात्रो गायतिः। कै गै शब्दे। स्तुतिमुच्चारयत। यूयमृत्विजो मत्पुत्रपौत्रा वा॥१०॥

---

१. 'चैयति', २. 'कर्म वा' ख. पाठः.

### वेङ्कटमाधवीयम् ।

यो रायः । यः स्तोतुर्धनस्य रक्षकः महान् शोभनपूरणः[1] सुन्वतः सखा तस्मा इन्द्राय गायतेति ॥ १० ॥

इति प्रथमस्य प्रथमे अष्टमो वर्गः ॥

---

**आत्वेतानिषीदतेन्द्रमभिप्रगायत ।**
**सखायःस्तोमवाहसः ॥ १ ॥**

आ । तु । आ । इत । नि । सीदत । इन्द्रम् । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ॥ १ ॥

### स्कन्दस्वामीयम् ।

तुशब्दः पदपूरणः क्षिप्रपर्यायो वा । आ आ इत्युपसर्गस्याभ्यासात् तत्सम्बन्धिन इतेत्याख्यातस्याप्यभ्यासः । क्षिप्रमे(ते ? त) आख्याताभ्यासे च लोके गम्यतामित्यादौ अवश्यं कर्तव्यता प्रतीयते । क्षिप्रमवश्यमागच्छतेत्यर्थः । आगत्य च निषीदत उपविशत । यथास्थानं निषद्य च इन्द्रमभिप्रगायत । गायतिरर्चतिकर्मा । प्रकर्षेणाभिष्टुत । हे सखायः ऋत्विजः । स्तोमवाहसः स्तोमानामिन्द्रं प्रति प्रापयितारः, स्तोतार इत्यर्थः ॥ १ ॥

### वेङ्कटमाधवीयम् ।

आत्वेत । पूर्वेण सूक्तेनाहूतमिन्द्रं स्तोतुमुपक्रमते । आगच्छत क्षिप्रमुद्गातारः । उपसर्गाः प्रयुक्ता अपि प्रागाख्यातात्[2] पुनः प्रयुज्यन्ते । वक्ष्यते[3] तत्र कारणम् । आगत्य च निषीदत गानार्थम् । अथेन्द्रमभिप्रगायत सखायः । प्रस्तावप्रतिहारोपगानोपनिधनस्तोमस्य नेतारः ॥ १ ॥

---

१. 'प' ख. पाठः. २. 'क् पु', ३. 'स्तोतृप्रतिहर्तृउद्गातारः स्तो' ख. पाठः.

पुरूतमंपुरूणामीशानंवार्याणाम्।
इन्द्रंसोमेसचासुते ॥ २ ॥

पुरुऽतमम्। पुरूणाम्। ईशानम्। वार्याणाम्। इन्द्रम्। सोमे। सचा। सुते ॥ २ ॥

## स्कन्दस्वामीयम्।

कीदृशम् इन्द्रम्। उच्यते। पुरूतमम्। पुरुशब्दो बहुनाम। तमशब्दोऽपि नातिशयप्रत्ययः। अर्थासम्भवादुदात्तत्वाच्च। किन्तर्हि, 'तमु अभिकाङ्क्षायाम्' इत्यस्य रूपम्। बहुभिर्योऽभिकाङ्क्ष्यते प्रार्थ्यते याच्यते, स पुरूतमः, तं पुरूतमम्। पुरूणां बहूनाम् ईशानं स्वामिनम्। वार्याणां वरणीयानाम् उत्कृष्टानां धनानाम्। क्रियाशब्देनेदमिन्द्रस्य गुणाभिधानं, न नाम्ना प्रतिनिर्देशः। कुत एतत्। अस्यामृचि आख्याताभावाद् वा पूर्वयर्चैकवाक्य(भ ? भा)वात् तस्यां चेन्द्रशब्दस्य नाम्नो विद्यमानत्वात्। इदि परमैश्वर्ये। अत्यन्तेश्वरमित्यर्थः। कदा पुनः स्तवाम। उच्यते। सोमे सचा सुते। सचा सहेत्यर्थः। सर्वैर्ऋत्विग्भिः सहाभिषुते। कालोपलक्षणं चेदम्। अभिषवोत्तरकालमित्यर्थः॥ २ ॥

## वेङ्कटमाधवीयम्।

पुरूतमम्। बहूनामुपक्षपयितारम्[2]। गवामसि गोपतिरित्यनेन[3] समानो निर्देशः। धनानामीश्वरमिन्द्रमभिप्रगायत[4] सहाभिषुते[5] सोमे ॥ २ ॥

सघानोयोगआभुवत्सरायेसपुरंध्याम्।
गमद्वाजेभिरासनः ॥ ३ ॥

---

१. 'स्याभि', २. 'पिता' क. पाठः. ३. 'मिति गो', ४. 'न्द्रं सहाभि', ५. 'ताभि' ख. पाठः.

सः । घ । नः । योगे । आ । भुवत् । सः । राये । सः । पुरम्ऽध्याम् । गमत् । वाजेभिः । आ । सः । नः ॥ ३ ॥

## स्कन्दस्वामीयम् ।

घ इति पदपूरणः। स प्रकृत इन्द्रः नः अस्माकं योगे। योग उद्योगः, उत्साहः, अलब्धलाभो वा, तस्मिन्। आभुवद्। आभिमुख्येन भवतु। योगमस्माकं करोत्वित्यर्थः। स एव राये धने स एव पुरन्ध्यां बह्व्यां प्रज्ञायाम्। गमद् वाजेभिरागमद् आगच्छतु। वाजेभिः सहयोगलक्षणैषा तृतीया। अस्मभ्यं यानि दातव्यानि तैरन्नैः सह तानि गृहीत्वेत्यर्थः। अथवा हेताविय तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। हविर्लक्षणैरन्नैर्हेतुभूतैः। हविरुपभोगार्थमित्यर्थः। कः, स एवेन्द्रः। कस्य वाजेभिः, नः अस्मत्सम्बन्धिभिः ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

सवानः। स एवास्माकमप्राप्तप्राप्त्यर्थं[1] योगमावहतु[2]। स धनाय पुरन्धिर्बहुधीर्यो या तस्यै चान्नैश्चास्मानागच्छतु सः ॥ ३ ॥

यस्यसंस्थेनवृण्वतेहरीसमत्सुशत्रवः।
तस्माइन्द्रायगायत ॥ ४ ॥

यस्य । सम्ऽस्थे । न । वृण्वते । हरी इति । समत्ऽसु । शत्रवः । तस्मै । इन्द्राय । गायत ॥ ४ ॥

## स्कन्दस्वामीयम् ।

यस्येन्द्रस्य स्वभूतौ संस्थे। अपठितमपि संग्रामनामैतत्। संग्रामे। न वृण्वते। वृणोतिरत्र सामर्थ्यात् प्राप्त्यर्थः। प्राप्नुवन्ति। हरी अश्वौ।

---

१. 'र्थमा' ख. पाठः. २. 'भवतु' क. पाठः.

समत्सु । संस्थ इत्यनेन गतत्वात् क्रियाशब्दोऽयं, न संग्रामनाम । अद भक्षणे । सम्भक्षयत्सु परस्परं योद्धृषु महति युद्धे प्रवृत्त इत्यर्थः । शत्रवो वैरिणः । यः संग्रामे महति युद्धे प्रवृत्ते दूरस्थानेवं रथप्राप्तान् शत्रून् निहन्तीत्यर्थः । तस्मा इन्द्राय सामान्युच्चारयत वा स्तुतीः ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

यस्य संस्थे । यस्मिन्नवस्थिते न वारयन्ति[2] तस्य स्वभूतावश्वौ सङ्ग्रामेषु शत्रवः तस्मा इन्द्राय गायत ॥ ४ ॥

**सुतपाव्ने सुता इमे शुचयो यन्ति वीतये ।**

**सोमासो दध्याशिरः ॥ ५ ॥**

सुतऽपाव्ने । सुताः । इमे । शुचयः । यन्ति । वीतये । सोमासः । दधिऽआशिरः ॥ ५ ॥

### स्कन्दस्वामीयम् ।

सुतानां सोमानां पात्रे सुता इमे यन्ति गच्छन्ति । नचाप्रदीयमानानां गमनं सम्भवतीति प्रदानमनेन लक्ष्यते । सम्प्रदानचतुर्थीश्रुतेः दानार्थ एव वा एतिः । प्रदीय(ते? न्त इ)त्यर्थः । किमर्थं, वीतये पानाय । के, सोमासः सोमाः । दध्याशिरः दधिमिश्राः । सोममिश्रं हि दध्याशीरुच्यते ॥ ५ ॥

### वेङ्कटमाधवीयम् ।

सुतपाव्ने । सुतं[3] सोमं यः पिबति तस्मै सुता इमे सोमाः पूताः पानाय गच्छन्ति दधिमिश्र(य?)णाः ॥ ५ ॥

इति प्रथमस्य प्रथमे नवमो वर्गः ॥

---

१. 'न स्वर' ख. पाठः. २. 'पा' क. पाठः. ३. 'तं यः' ख. पाठः.

त्वंसुतस्यपीतयेसद्योवृद्धोअजायथाः ।
इन्द्रज्यैष्ठ्यायसुक्रतो ॥ ६ ॥

त्वम् । सुतस्य । पीतये । सद्यः । वृद्धः । अजायथाः । इन्द्र । ज्यैष्ठ्याय । सुक्रतो इति सुऽक्रतो ॥ ६ ॥

## स्कन्दस्वामीयम् ।

त्वं सुतस्य सोमस्य पीतये पानार्थम् । सद्यः तस्यामेव वेलायां शरीरेण च वीर्येण च परिवृद्धः प्रतिबन्धकापनयनसमर्थः अजायथाः जायसे भवसि । नच केवलायै सोमपीतये किन्तर्हि, हे इन्द्र! ज्यैष्ठ्याय च । (ज्यैष्ठ्या? ज्येष्ठाः) प्रशस्यतमाः प्रवृद्धतमा वा । तेषां कर्म ज्यैष्ठ्यं, तस्मै च वृत्रवधादिकाय च । हे सुक्रतो! सुकर्मन्! सुप्रज्ञ! वा । अथवा पीतय इति तृतीयार्थे चतुर्थी । त्वं सुतस्य सोमस्य पानेन सद्य एव समान एवाहनि (वा? पा) (वा)नन्तरमेव शरीरेण च वीर्येण च परिवृद्धो भवसि । किमर्थं, ज्यैष्ठ्याय सुकर्मणे वृत्रवधादिकाय ॥ ६ ॥

## वेङ्कटमाधवीयम् ।

त्वं सुतस्य पानार्थं सद्यो वृद्धो भवसि प्रवृद्धशरीरः । इन्द्र! श्रेष्ठं कर्म कर्तुं शत्रुषु सुप्रज्ञ! ॥ ६ ॥

आत्वाविशन्त्वाशवःसोमासइन्द्रगिर्वणः ।
शन्तेसन्तुप्रचेतसे ॥ ७ ॥

आ । त्वा । विशन्तु । आशवः । सोमासः । इन्द्र । गिर्वणः । शम् । ते । सन्तु । प्रऽचेतसे ॥ ७ ॥

## स्कन्दस्वामीयम्।

आ त्वा विशन्तु प्रविशन्तु त्वा। त्वया पीयन्तामित्यर्थः। कीदृशाः, आशवः स्वकार्यकरणे क्षिप्राः। के, सोमासः सोमाः। हे इन्द्र! गिर्वणः। गिरः स्तुतयः। वनतिः सम्भक्त्यर्थः। स्तुतिभिः सम्भजनीयः। स्तुतीनां वा सम्भक्तः। आविश्य च शं, सुखनामैतत्, सुखम्। तुभ्यं सन्तु भवन्तु। प्रचेतसे प्रकृष्टप्रज्ञानाय॥ ७॥

## वेङ्कटमाधवीयम्।

आ त्वा विशन्तु। आविशन्तु त्वां[१] क्षिप्राः सोमा इन्द्र! गीर्भिर्वननीय!। शं च तुभ्यं भवतु सुमतये॥ ७॥

त्वांस्तोमाअवीवृधन्त्वामुक्थाशतक्रतो।
त्वांवर्धन्तुनोगिरः॥ ८॥

त्वाम्। स्तोमाः। अवीवृधन्। त्वाम्। उक्था। शतक्रतो इति शतऽक्रतो। त्वाम्। वर्धन्तु। नः। गिरः॥ ८॥

## स्कन्दस्वामीयम्।

त्वां स्तोमाः स्तोत्राणि अस्मदीयोद्गातृप्रयुक्तानि अवीवृधन् वर्धितवन्तः। स्तूयमाना हि देवता वीर्येण वर्धन्ते। नच केवलाः स्तोमाः, त्वदीयान्युक्थान्यपि (त्वां) वर्धितवन्ति। हे शतक्रतो!। उक्थशब्दस्तार्तीयसवनकहोतृकशस्त्रविशेष(ण?)वचनः। शस्त्रमात्रवचनो वा। त्वां वर्धन्तु वर्धयन्तु। नः अस्माकमपि स्वभूता गिरः स्तुतयः॥ ८॥

## वेङ्कटमाधवीयम्।

त्वां स्तोमाः।[२] त्वां त्रिवृदादयः स्तोमा अवीवृधन्, त्वां शस्त्राणि च। शतकर्मन्! त्वामेव वर्धयन्त्वस्माकमपि[३] गिरः॥ ८॥

---

१. 'त्वा क्षिप्रं सो' ख. पाठः. २. 'माः। त्रि', ३. 'कं गि' क. पाठः.

**अक्षितोतिःसनेदिमंवाजमिन्द्रः सहस्रिणम् ।**
**यस्मिन्विश्वानिपौंस्या ॥ ९ ॥**

**अक्षितऽऊतिः । सनेत् । इमम् । वाजम् । इन्द्रः । सहस्रिणम् । यस्मिन् । विश्वानि । पौंस्या ॥ ९ ॥**

### स्कन्दस्वामीयम् ।

अक्षिता अन्येनाहिंसिता अक्षीणा वा ऊतिः पालनं यस्य सोऽक्षितोतिः । सनेत् सम्भजतु । इमं वाजं सङ्ग्रामम् इन्द्रः सहस्रिणं योद्धृसहस्रयुक्तम् । अस्मिन् सङ्ग्रामेऽस्मद्रक्षणाय सन्निहितो भवत्वित्यर्थः । यस्मिन् सङ्ग्रामे । किम्, उच्यते । (यस्मिन् ?) विश्वानि सर्वाणि । पौंस्या । बलनामैतत् । हस्त्यश्वरथपदातिलक्षणानि बलानि । अथवा वाज इत्यन्ननाम । इदमस्मदीयं सोमलक्षणमन्नं सम्भजेत् पिबेद् इन्द्रः स्तुतिसहस्रयुक्तं यस्मिन् बलानि सर्वाणि सामर्थ्यलक्षणानि । वाजः पीतः सर्वसामर्थ्यानि जनयतीत्यर्थः । अथवा यस्मिन् विश्वानि पौंस्येति इन्द्रविशेषणम् । यस्मिन्निन्द्रे सर्वाणि बलानि यः सर्वैर्बलैर्बलवान् यो महाबल इत्यर्थः ॥ ९ ॥

### वेङ्कटमाधवीयम् ।

अक्षितोतिः । अक्षीणरक्षणोऽपि[1] भजेतानेकपुरुषयुक्तमिमं सङ्ग्रामं यस्मिन् (वि?) सर्वाणि बलानि भा(त ? न्तु)र्भव(ति ? न्ति) ॥ ९ ॥

**मानोमर्ताअभिद्रुहन्तनूनामिन्द्रगिर्वणः ।**
**ईशानोयवयावधम् ॥ १० ॥**

**मा । नः । मर्ताः । अभि । द्रुहन् । तनूनाम् । इन्द्र । गिर्वणः । ईशानः । यवय । वधम् ॥ १० ॥**

---

१. 'वि' क. पाठः.

## स्कन्दस्वामीयम् ।

मा नः अस्माकम् मनुष्या अभिद्रुहन् द्रोहं कार्षुः । तनूनां शरीराणाम् हे इन्द्र! गिर्वणः स्तुतिभिः सम्भजनीयः स्तुतीनां वा सम्भक्तः । ईशानः प्रभुस्त्वम् । यवय, यौतिः पृथग्भावे, पृथक् कुरु अपनयास्मत्तः । वधं हिंसां हन्तारं वा ॥ १० ॥

## वेङ्कटमाधवीयम् ।

मा नो मर्ता । माभिद्रुह्यन्तु इन्द्र! अस्माकमङ्गेभ्यः शत्रवः । गीर्भिर्वननीय! ईश्वरस्त्वं पृथक् कुरु शत्रूणामायुधमिति ॥ १० ॥

इति प्रथमस्य प्रथमे दशमो वर्गः ॥

---

युञ्जन्तिब्रध्नमरुषंचरन्तंपरितस्थुषः ।
रोचन्तेरोचनादिवि ॥ १ ॥

युञ्जन्ति । ब्रध्नम् । अरुषम् । चरन्तम् । परि । तस्थुषः । रोचन्ते । रोचना । दिवि ॥ १ ॥

## स्कन्दस्वामीयम् ।

योगः सम्बन्धः । युञ्जन्ति सम्बन्धयन्ति । केन, सामर्थ्यात् स्तुतिभिर्हविर्भिश्च । के, सामर्थ्यात् स्तोतारः यष्टारश्च । ब्रध्नं महन्नामैतत् । महान्तमिन्द्रम् । अरुषम् । रुशतिर्दीप्त्यर्थः रुद्वत्सारुशतीति प्रदर्शनात् । तस्य वा रोचतेर्वा दीप्तिकर्मण आङ्पूर्वस्येदं रूपम् । आङश्च ह्रस्वत्वम् । आरुशम् आरोचमानं वा । दीप्तमित्यर्थः । आरुषत्यार्यतीति गतिकर्मसु पाठादरुषतेर्गत्यर्थस्यारुषशब्दो गन्तृवचनः । शत्रून् यज्ञान् वा प्रतिगन्तारम् । चरन्तं परि सर्वतो गच्छन्तम् । यत्र यत्रेन्द्रो गच्छति, तत्र तत्रैनं स्तोतारो यष्टारश्च स्तुवन्ति चेत्यर्थः । अथवा, युञ्जन्तीति युजिः शुद्धोऽपि सामर्थ्यात् सोपसर्गार्थे द्रष्टव्यः । स्वार्थसिद्धौ स्तोतारो यष्टारश्चैनं नियुञ्जते । महान्तं दीप्तं चेन्द्रं सर्वतो गच्छन्तं, यत्र यत्र गच्छति तत्र तत्रैनं मनुष्या इदमिदं च नः

---

१. 'र्थे' ख. पाठः.

कुर्वित्यर्थं याचन्त इत्यर्थः । रथोऽत्र सामर्थ्याद् युज्यमानः, नेन्द्रं युञ्जन्ति । इन्द्रस्य रथं ब्रध्नमरुषं च सर्वतो गन्तारं गच्छन्तम् । के । सामर्थ्यात् सारथयो मातलिप्रभृतयः अन्येऽस्य रथं युञ्जन्ति स नः स्वयं युनक्ति ब्रध्नादिगुणः युञ्जन्ति न किञ्चिदिति । एवं गुणकीर्तनादिन्द्रस्येयं स्तुतिः । किञ्च तस्थुषः रोचन्ते रोचना दिवि । तस्थुष इति षष्ठीनिर्देशात् प्रभावेनेति वाक्यशेषः । स्थितस्य व्याप्रियमाणस्येन्द्रस्य प्रभावेन रोचन्ते दीप्यन्ते । रोचना दीप्तिस्वभावकानि नक्षत्राणि दिवि द्युलोके । कथं पुनरिन्द्रप्रभावेन नक्षत्राणि दीप्यन्ते । उच्यते । वक्ष्यते— 'इन्द्रो दीर्घाय चक्षस आसूर्यं रोहयद्दिवि' इति । सूर्यस्य प्रभावश्च सुषुम्नो नाम रश्मिः तत्सम्बन्धाचन्द्रमा नक्षत्राणि च दीप्यन्ते । अथवा युजिरुत्पूर्वार्थे । अन्तर्णीतण्यर्थश्च द्रष्टव्यः । उद्योजयन्त्युत्साहयन्ति वृष्टिकर्मणि ब्रध्नमरुषं चेन्द्रम् । किं कुर्वन्तम् । उच्यते । चरन्तं परितस्थुषः । परिशब्दो लक्षणे कर्मप्रवचनीयः तस्थुष इत्यनेन च सम्बध्यते । तस्थिवःशब्दः स्थावरवचनः । गच्छन्तं स्थावराणि प्रति । स्थावरग्रहणं चात्र जङ्गमस्यापि प्रदर्शनार्थम् । सोमपानायासुरयुद्धलोलुपतया जङ्गमस्थावरात्मकं कृत्स्नं ज(नं ? गत्) परिभ्रमन्तमित्यर्थः । के उद्योजयन्ति । उच्यते । रोचन्ते रोचना दिवि । एकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । आदित्यरश्मयो रोचन्ते रोचना दिवि ते आदित्यरश्मयो हि प्रावृडारम्भे रसदातारः । ते रसानर्पयन्तः उद्योजयन्तीन्द्रं[1] वृष्टिकर्मणि । एतस्मिंस्त्वर्थे रश्मिविषयत्वाद् रोचनेत्येतत् पदमूष्मान्तन्यायं दृश्यते न स्वरान्तमन्तो नैष पदकाराभिप्रायः । ज्योतिष्ट्वापेक्षं वा रश्मीनां नपुंसकत्वम् । अध्वर्यवस्त्वादित्यदेवतामृचं मन्यन्ते । कथम् । एतेषां हि विनियोजनेऽसियु(क्ताश्च ? क्तश्चा)श्वोऽनयादित्यरूपेणोच्यते । कथमवगम्यते । श्रुतेः । एवं हि श्रुतिर्भवति — 'युञ्जन्ति ब्रध्नमरुषमित्याह । असौ वा आदित्यो ब्रध्नः । अरुषोऽमुमेवास्मादादित्यं युनक्ति स्वर्गस्य लोकस्य समष्ट्यै' इति । तस्मादादित्यदेवतेयमिति । तन्न । तत्रापि विनियोगवशान्नियुज्यमानोऽश्वो ब्रध्नोऽरुषश्चोच्यते । भक्तिमात्रं तु श्रुतिः । अपिच यदि श्रुतिबलात् तत्रादित्यो देवता, तथा नाम इह त्वैन्द्रप्रकरणे समाना ब्रध्नारुषयोश्चेन्द्रेऽपि सम्भवात् । परस्यां चर्च्यस्य शब्देनानुवादात् । तेनेहादिष्टस्य ब्रध्नस्यान्वादेशात् तस्याश्चर्चो हरिसम्बन्धादैन्द्रताया असन्दिग्धत्वादैन्द्रत्वमेवास्या ऋच इति ॥ १ ॥

१. 'न्तीवेन्द्रत्रं' क., 'न्तीवेन्द्रक' ख. पाठः.

वेङ्कटमाधवीयम् ।

युञ्जन्ति ब्रध्नम् । युञ्जन्ति महान्तमारोचमानं दिवि चरन्तं परितः तस्थिवांसो देवा वा लोका वा रोचन्ते च । रोचनानि नक्षत्राणि, इन्द्रतेजसा सन्धुक्षितान्यह्न्येऽपि प्रकाशमानान्यत्रापि द्रष्टव्यम् ॥ १ ॥

युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
शोणा धृष्णू नृवाहसा ॥ २ ॥

युञ्जन्ति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥ २ ॥

स्कन्दस्वामीयम् ।

युञ्जन्ति सारथयोऽस्येन्द्रस्य स्वभूतौ काम्या कामयितव्यावुत्कृष्टौ कामसंवादिनौ वा हरी अश्वौ । विपक्षसा सव्यदक्षिणभेदेन विभिन्नौ रथपक्षौ ययोस्तौ विपक्षसौ । सकारश्छान्दस उपसर्जन(:)। पर्यायान्तरं वा पक्षश्शब्दो द्रष्टव्यः । रथस्य सव्यदक्षिणपार्श्वस्थावित्यर्थः । क युञ्जन्ति । रथे । कीदृशौ । शोणा रक्तवर्णौ । धृष्णू प्रगल्भौ, अभिभवितारौ शत्रूणाम् । नृवाहसा मनुष्यान् प्रति मनुष्याकारस्य वेन्द्रस्य वोढारौ ॥ २ ॥

वेङ्कटमाधवीयम् ।

युञ्जन्त्यस्य । युञ्जन्त्यस्य रथे कमनीयौ (पार्श्वे ? अश्वौ) सव्यदक्षिणयोः पार्श्वयोः युज्यमानौ शोणवर्णौ शत्रूणां धर्षकौ नेतुरस्य वोढारौ देवाः ॥ २ ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
समुषद्भिरजायथाः ॥ ३ ॥

केतुम् । कृण्वन् । अकेतवे । पेशः । मर्याः । अपेशसे । सम् । उषत्ऽभिः । अजायथाः ॥ ३ ॥

## स्कन्दस्वामीयम् ।

केतुरिति प्रज्ञानाम । प्रज्ञां कुर्वन् । अकेतवे । षष्ठ्यर्थे चतुर्थीयम् । प्रज्ञारहितस्य । पेशः रूपनामैतत् । रूपं च । हे मर्याः । व्यत्ययेनात्रैकवचनस्य स्थाने बहुवचनम् । मर्य ! मर्त्याकार[1] ! इन्द्र ! । अपेशसे रूपवर्जितस्य । प्रज्ञारूपे चात्र प्रदर्शनार्थे । यस्य यदभिलषितं, तस्य तत्[2] तत्[3] सम्पादयन्नित्यर्थः । समुषद्भिः । सशब्दः सहार्थे । उषच्छब्दो वश कान्तावित्यस्य कान्तिवचनो न वसोऽर्थासम्भवात् । सह कान्तिभिस्त्वमजायथाः जन्मन ए(वं ? व) प्रभृति त्वं सर्वस्य सर्वाभिलषितसम्पादी कान्तश्चासीरित्यर्थः । अथवा माध्यमिकाः स्तनयित्नुलक्षणा वाच उषसः, ताभिः सह त्वमजायथाः जन्मनः प्रभृति गर्जितेत्यर्थः ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

केतुं कृण्वन् । रात्रौ स्वपतो गतप्रज्ञस्य प्रज्ञोदयं कुर्वन् तमसा तिरोहितरूपाणां गवादीनां रूपं च ज्ञायते । केतुं कृण्वन् प्रज्ञानरहिताय पेशश्चापेशसे समजायथाः त्वमुषोभिः सह तमिममाश्चर्यं मनुष्याणां निवेदयितुं त्वां सम्बोधयन्ति मर्त्या इति ॥ ३ ॥

**आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।**

**दधाना नाम यज्ञियम् ॥ ४ ॥**

**आत् । अह । स्वधाम् । अनु । पुनः । गर्भऽत्वम् । आऽईरिरे ।**

**दधानाः । नाम । यज्ञियम् ॥ ४ ॥**

## स्कन्दस्वामीयम् ।

षडादहस्वधामिति मारुत्योऽनन्तरा ऋचः सुरूपकृत्नुमित्यैन्द्रमामेधातिथेरित्यैन्द्रत्वे प्राप्तेऽयमपवादः । आदहस्वधामित्येताः षडनन्तरा मरुद्देवता वीळुचिदारुजत्नुभिरित्यस्या देवतान्तरोपदेशा[5]त् तद्वर्ज(न ?)मन्याः षण्मारुत्यः प्रतीयेरन् । तन्निवृत्त्यर्थमनन्तरवचनम् । आच्छब्दोऽथशब्दपर्याय आनन्तर्ये ।

---

१. 'मानुष्याका', २. 'तं तन्नास्ति त', ३. 'तत् स' क. ख. पाठः. ४. 'ता उ', ५ 'शत्वात्' क. पाठः.

अहेति विनिग्रहार्थीय एवशब्दार्थे । स्वधामिति स्वधाशब्द उदकनाम । अन्विति पश्चादर्थे । कस्य पश्चात् । सामर्थ्याद् वृष्टेः । एवं सम्बन्धयोजनाद् वृष्टेः पश्चादेवोदकं पुनर्गर्भत्वम् एरिरे । ईर गतावित्यस्य ण्यन्तस्येदं रूपम् । गमयन्त्यापादयन्ति मरुतः । पुनश्शब्दश्चातीतसंवत्सरगर्भत्वापादनापेक्षः । एतदुक्तं भवति — वार्षिकांश्चतुरो मासान् वर्षित्वा तदनन्तरमष्टौ मासांस्तदुदकं रश्मिभिः प्रत्याहृत्य त(मा ? दा)गामिसंवत्सरे वर्षितुं पुनर्गर्भमापादयन्ति मरुत इति । अथवा स्वधेत्यन्ननाम । सस्यलक्षणं चात्रान्नमुच्यते । अनुशब्दश्च पश्चादर्थ एतेन सम्बध्यते । स्वधामनु सस्यलक्षणस्यान्नस्य पश्चात् सस्यान् निष्पाद्यानन्तरमेव पुनर्गर्भत्वमापादयन्ति मरुत इत्यर्थः । किं, सामर्थ्यादुदकम् । किं कुर्वन्तः । उच्यते । दधाना धारयन्तोऽन्तरिक्ष आदित्यमण्डले वा । किं, नाम । तदेवोदकम् । नामेति ह्युदकनामपठितम् । कीदृशं, यज्ञियं यज्ञसम्पादि मरुद्भिर्गृह्यते । अष्टौ मासानन्तरिक्ष आदित्यमण्डले वा धार्यमुदकं गर्भीभवत्यत एवमुच्यते— दधाना नाम यज्ञियं पुनर्गर्भत्वमेरिर इति । अथवा नामशब्दः संज्ञावचनः । धारयन्तो यज्ञियां संज्ञाम् । कतमाम् । सामर्थ्यान्मरुत इत्येताम् । मरुन्नामानमित्यर्थः[1] । अथवैवमन्यथास्या ऋचोऽर्थयोजना—अनुशब्दः पश्चादर्थः सामर्थ्याद् वृष्ट्यैव सम्बध्यते । स्वधामित्येतत् तु सस्यलक्षणान्नवचनं गर्भत्वमेरिर इत्येतेन सम्बध्यते । दधाना इत्यपि दधातिर्दानार्थः । नामशब्दोऽप्युदकनाम । एवमेकवाक्यता । वृष्टेः पश्चादनन्तरमेव सस्यलक्षणमन्नं पुनर्गर्भत्वमेरिरे मरुतो ददतः उदकं यज्ञसम्पादि । एतदुक्तं भवति — वर्षास्वोषधीर्जनयित्वा न तावत्येव कृतार्थीभवन्ति मरुतः, किन्तर्हि, ता एव पुनर्गर्भयन्ति उदकदानेनेति ॥ ४ ॥

## वेङ्कटमाधवीयम् ।

आदह स्वधाम् । अनन्तरमेव वृष्टेः मरुतः अन्नार्थं पुनरपि गर्भत्वं प्राप्नुवन्ति । अष्टौ मासास्तिरोभूता वर्तन्ते वर्षाभ्योऽनन्तरम् । आश्चर्येऽहशब्दः । दधाना नाम यज्ञानामीद(ङ् ? क्) चाताद(ङ् ? क्) (चा ? चे)त्यादिकम् ॥ ४ ॥

वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।

अविन्द उस्रिया अनु ॥ ५ ॥

---

१. 'र्थः । नामश' क. पाठः.

वीळु। चित्। आरुजत्नुऽभिः। गुहा। चित्। इन्द्र। वह्निऽभिः। अविन्दः। उस्रियाः। अनु ॥ ५ ॥

## स्कन्दस्वामीयम्।

एका वीळुचिदिन्द्राय मरुद्भिः सह गीयते। न केवलं मरुद्भ्यः। ऐ-(न्द्रा? न्द्र)मारुतीयं न मारुत्येव केवलेत्यर्थः। वीळयतेः संस्तम्भकर्मणो वीळु दृढम्। चिच्छब्दोऽप्यर्थे। दृढमपि पर्वतादि आरुजत्नुभिः। रुजो भङ्गे। सहयोगलक्षणा चेयं तृतीया। भञ्जद्भिर्मरुद्भिः सह। गुहा चिद् गुहायामपि स्थिता। हे इन्द्र! कीदृशैर्मरुद्भिः। उच्यते। वह्निभिः वोढृभिः। अविन्दः लब्धवानसि। काः। उस्रियाः देवानां स्वभूता गाः। अनु पश्चात्। कस्य। सामर्थ्यात् सरमाप्रत्यागमनस्य। पणिभिरसुरैरपहृताः गा गुहायां निहिताः सरमाप्रत्यागमनोत्तरकालं मरुद्भिः सह त्वमलब्धा इत्यर्थः ॥ ५ ॥

## वेङ्कटमाधवीयम्।

वीळुचित्। दृढमपि पर्वतसान्वाभिमुख्येन भञ्जद्भिः पर्वतस्य गुहायामपि इन्द्र त्वं वोढृभिर्मरुद्भि(स्तं? स्त्वं) पणिभिरपहृता गा अन्वविन्दः ॥ ५ ॥

इति प्रथमस्य प्रथमे एकादशो वर्गः ॥

देवयन्तोयथामतिमच्छाविदद्वसुंगिरः।
महामनूषतश्रुतम् ॥ ६ ॥

देवऽयन्तः। यथा। मतिम्। अच्छ। विदत्ऽवसुम्। गिरः। महाम्। अनूषत। श्रुतम् ॥ ६ ॥

## स्कन्दस्वामीयम्।

देवयन्तः देवशब्दोऽत्र प्रकृतान् मरुत एवाह। तानिच्छन्तो देवयन्तः। यथा मतिम्। मन्यतिरर्चतिकर्मा। मन्यते स्तूय(ये?)नेऽसाविति मतिरिन्द्रः,

1. 'तानां अ' क. ख. पाठः.

ज्ञाता वा मतिर्विद्वान् ब्राह्मणः । यथा सर्वस्तुत्यमिन्द्रं विद्वांसं वा ब्राह्मणं तद्वत् । अच्छ । निपातोऽयमाप्तुमित्यस्यार्थे । आप्तुम् । किम् । विदद्वसुम् । विन्दतेर्लाभार्थस्य विदच्छब्दः, कर्मसाधनश्च द्रष्टव्यः । (गु ? ग)णाभिप्रायं चैतदेकवचनम् । लब्धधनं मरुद्गणम् । गिरः । तृतीयार्थे प्रथमेयम् । गीर्भिः स्तुतिभिः । महां महान्तम् । अनूषत । नु स्तवने । स्तुवन्ति स्तुवन्तु वा ऋत्विजो मत्पुत्रपौत्रादयो वा । कीदृशम् । श्रुतं ख्यातम् ॥ ६ ॥

वेङ्कटमाधवीयम् ।

देवयन्तः । देवानिच्छन्तो यथा पूजनीयमिन्द्रमभिष्टुवन्ति विदद्वसुं वेदयद्वसुम् उदारं गिरः स्तोतारो महान्तं मरुद्गणमिति ॥ ६ ॥

**इन्द्रेणसंहिदृक्षसेसंजग्मानोअबिभ्युषा ।**

**मन्दूसमानवर्चसा ॥ ७ ॥**

**इन्द्रेण । सम् । हि । दृक्षसे । सम्ऽजग्मानः । अबिभ्युषा ।**

**मन्दू इति । समानऽवर्चसा ॥ ७ ॥**

## स्कन्दस्वामीयम् ।

इन्द्रेणेति सहयोगलक्षणा तृतीया । इन्द्रेण सह त्वं मरुद्गण ! सं हि दृक्षसे । हिशब्दः पदपूरणः । सम्यग् दृश्यसे । सञ्जग्मानः सङ्गच्छमानः तत्र तत्र वृत्रवधादौ कार्ये अबिभ्युषा भयवर्जितेन । 'तस्या एकान्तरायास्तु अर्धर्चोऽन्त्यो द्विदेवतः' या ऐन्द्रमारुत्युक्ता (न ?) ऋक् एका वीळुचिदिति । तस्या एका(न्तरा ?)न्तरा या इन्द्रेण संहीत्येषा तस्या, अर्धर्चोऽन्त्यो द्विदेवतः ऐन्द्रमारुतः । मन्दू । मन्दतेर्मोदनार्थस्यैतद् रूपम् । नित्यप्रमुदितौ । समानवर्चसा तुल्यदीप्ती च इन्द्रमरुद्गणौ ॥ ७ ॥

वेङ्कटमाधवीयम् ।

इन्द्रेण संहि । इन्द्रेण हि सन्दृश्यते स सङ्गच्छमानोऽबिभ्युषा मरुद्गणं युद्धार्थम् । इन्द्रमरुद्गणौ मादिष्णू भवथ(:) संयुक्तौ समानवर्चसौ । यद्वा मन्दुना समानवर्चसेन्द्रेणेति ॥ ७ ॥

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति ।

गणैरिन्द्रस्य काम्यैः ॥ ८ ॥

अनवद्यैः । अभिद्युऽभिः । मखः । सहस्वत् । अर्चति ।

गणैः । इन्द्रस्य । काम्यैः ॥ ८ ॥

स्कन्दस्वामीयम् ।

सर्वाश्चात्र द्वितीयार्थे तृतीयाः । अनवद्यान् अगर्ह्यान्[1] । द्युशब्दो दीप्तिवचनः । अभिगतदीप्तीन् अत्यन्तदीप्तान् । मखो यज्ञः । सहस्वद् बलवत् । सुष्ठ्वित्यर्थः । अर्चति स्तौति । यद् यज्ञ ऋत्विजः स्तुवन्ति, तदिदं यज्ञ एव (स्तुवन्ती ? स्तौती)त्युच्यते । अथवा मखं करोति मखयति । 'तत् करोती'ति णिच् । ण्यन्तादच् । मखः[2] यज्ञकारी संस्तौति । कान् । गणैः (गणान्) सप्त सप्तकान् । इन्द्रस्य काम्यैः काम्यान् प्रियान् । अथवा, अनवद्यैरित्यादिषु तृतीयाः स्वार्थ एव । तृतीयानिर्देशात्तु युक्त इति च वाक्यशेषः । अर्चतीति व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अनवद्यादिगुणैर्मरुद्गणैर्युक्तो यज्ञः सु(ष्ठ्वित्युच्य ? ष्ठ्वर्च्य)ते । सु(वते ? ष्ठ्वर्च्यन्ते)ऽत्र मरुतो देवा इन्द्र(स्य ? श्च । अतो) यज्ञोऽत्यन्तं पूज्यत इ(त्यर्थः ? त्युच्यते) ॥ ८ ॥

वेङ्कटमाधवीयम् ।

अनवद्यैः । अवद्यरहितैरभिद्योतमानैः सह स्तोता सहस्वन्तमिन्द्रमर्चति गणैरिन्द्रस्य प्रियैः । गणशब्द एकवचनबहुवचने पर्यायेण भवतः ॥ ८ ॥

अतः परिज्मन्ना गहि दिवो वा रोचनादधि ।

समस्मिन्नृञ्जते गिरः ॥ ९ ॥

अतः । परिऽज्मन् । आ । गहि । दिवः । वा । रोचनात् ।

अधि । सम् । अस्मिन् । ऋञ्जते । गिरः[3] ॥ ९ ॥

१. 'र्ह्यान् तैर्दीप्ति' क., 'र्ह्यान् सुद्यु' ख. पाठः. २. 'खं', ३. 'रि' क. ख. पाठः.

## स्कन्दस्वामीयम्।

अत इति मरुद्गणस्थानस्यान्तरिक्षस्य निर्देशः। अतोऽन्तरिक्षलोकात्। हे परिज्मन्!। अज गतिक्षेपणयोरित्यस्यैतद् रूपम्। सर्वतोगामिन्! मरुद्गण! आगहि आगच्छ। दिवो वा द्युलोकाद्वा। रोचनाद् दीप्तात्। अधिशब्दस्तु आगहीत्येतेन सम्बध्यते धात्वर्थानुवादी च, पादपूरणो वा नार्थान्तरवचनः 'अधिपरी अनर्थकावि'ति। अथवा, अधिशब्दः सामर्थ्याद्वार्थे। रोचनाद्वा आदित्यमण्डलाद्वेत्यर्थः। किं कारणम् आगच्छति। उच्यते। समस्मिन् ऋञ्जते। ऋञ्जतिः प्र(धा? साध)नकर्मा। आत्मन एवायं परोक्षरूपेण प्रथमपुरुषनिर्देशः। अयं मधुच्छन्दा नाम ऋषिर्ऋत्विग् ब्राह्मणाच्छंस्याख्ये अस्मिन् यज्ञे समृञ्जते सम्यक् प्रसाधयति उपकल्पयति गिरः॥ ९॥

## वेङ्कटमाधवीयम्।

अतः परिज्मन्। अतोऽन्तरिक्षात् परितो गन्तर्मरुद्गण! आगच्छ आदित्यस्य रोचनाल्लोकात्। अधिपरी सप्तमीपञ्चम्योरर्थं स्फुटीकुरुतः। अस्मिन् मरुद्गणे सम्प्रसाधयति स्तुतीर्मधुच्छन्दाः॥ ९॥

इतोवासातिमीमहेदिवोवापार्थिवादधि।
इन्द्रंमहोवारजसः॥ १०॥

इतः। वा। सातिम्। ईमहे। दिवः। वा। पार्थिवात्। अधि। इन्द्रम्। महः। वा। रजसः॥ १०॥

## स्कन्दस्वामीयम्।

अतः परं यथाप्राप्तमैन्द्रमेव। (अत? इतो वा) इत्येतस्य सन्निहितवचनस्य वा पार्थिवादित्यनेन व्यवहितेनापि सामानाधिकरण्यम्। इतो वा पार्थिवाल्लोकात्[1]। सातिम्। षणु दाने, वन षण सम्भक्तावित्यस्य वा सातिर्दानं, लाभो वा। ताम् ईमहे। याच्ञाकर्मायम्। याचामहे। दिवो वा द्युलोकाद्वा। अधिशब्दस्तु पदपूरणः। कं[2] याचामहे[3] इन्द्रम्। नचैताभ्यामेव

---

१. 'लो' ख. पाठः. २. 'किं', ३. 'हे न' क. ख. पाठः.

केवलाभ्याम्। किन्तर्हि। महो वा रजसः। रजश्शब्दो लोकवचनः। महतो लोकाद्वा। कथमस्मात्। महत्त्वात् पारिशेष्याच्चान्तरिक्षाद्। यतःकुतोऽप्यस्मभ्यमिन्द्रो ददात्वित्यर्थः॥ १०॥

### वेङ्कटमाधवीयम्।

इतो वा। अत उत्तरामिन्द्र एव देवता। कुतः इन्द्र आगच्छतीति न वयं जानीमः। तमिन्द्रमस्या[१] भूमेरागच्छन्तं[२] देयं धनं याचामहे। अपिवा दीप्तात् पार्थिवाँल्लोकात्। पृथिव्यन्तरिक्षनाम। इन्द्रं महो वा रजसः स्वर्गादिति॥ १०॥

**इति प्रथमस्य प्रथमे द्वादशो वर्गः॥**

---

**इन्द्रमिद्गाथिनोबृहदिन्द्रमर्केभिरर्किणः।**

**इन्द्रंवाणीरनूषत॥ १॥**

**इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्केभिः। अर्किणः। इन्द्रम्। वाणीः। अनूषत॥ १॥**

### स्कन्दस्वामीयम्।

इच्छब्द एवार्थे। इन्द्रमेव। (सं?)गीयन्ते इति गाथाः सामानि। तद्वन्तो गाथिनः उद्गातारः। तृतीयार्थे द्वितीयेयं बृहन्नाम, महता[३] साम्ना इन्द्रमेव अर्केभिः मन्त्रैः ऋग्लक्षणैः अर्किणो मन्त्रवन्तो होतारः। इन्द्रमेव वाणीः। वाङ्नामैतत्। तृतीयार्थे चात्र द्वितीया। यजुर्लक्षणैः अध्वर्यवः अनूषत अस्तुवन्॥ १॥

### वेङ्कटमाधवीयम्।

इन्द्रमित्। इन्द्रमेवोद्गातारो बृहता साम्ना स्तुवन्ति। इन्द्रं शस्त्रैर्होतार इन्द्रमेव सर्वा गिरः स्तुवन्ति[४]॥ १॥

---

१. 'वी(न्त्य ? त्य)न्त' क. पाठः. २. 'क्षा' ख. पाठः. ३. 'ता वा सा', ४. 'स्तुवन्तः' क. ख. पाठः.

**इन्द्रइद्धर्योःसचासम्मिश्लआवचोयुजा।**

**इन्द्रोवज्रीहिरण्ययः॥ २॥**

इन्द्रः। इत्। हर्योः। सचा। सम्ऽमिश्लः। आ। वचःऽयुजा। इन्द्रः। वज्री। हिरण्ययः॥ २॥

स्कन्दस्वामीयम्।

इन्द्र एव हर्योरश्वयोः सचा सह सम्मिश्लः आ[1] आभिमुख्येन सम्मिश्लयिता[2]। केन। सामर्थ्याद् रथेन। रथे यौगपद्येन नियोक्तेत्यर्थः। कीदृशयोः। वचोयुजा। षष्ठीद्विवचनस्यायमाकारः। युज्येथामिति वचनमात्रेण स्वयमेव यौ युज्येते, तौ वचोयुजौ। तयोस्तु[3] विनीतयोरित्यर्थः। इन्द्र एव वज्री वज्रवान्। हिरण्ययः सादृश्यादेष व्यवहारः। हिरण्मयसदृशः दीप्तवर्ण इत्यर्थः॥ २॥

वेङ्कटमाधवीयम्।

इन्द्र इत्[5]। एकाकी चरन्निन्द्र[4] एव स्वाश्रयोऽसहायभूतः स एव[6] संयोजयत्युक्तिमात्रेण[7] युज्यमानाविन्द्रो[8] वज्री हिरण्मयसर्वशरीरः॥ २॥

**इन्द्रोदीर्घायचक्षसआसूर्यरोहयद्दिवि।**

**विगोभिरद्रिमैरयत्॥ ३॥**

इन्द्रः। दीर्घाय। चक्षसे। आ। सूर्यम्। रोहयत्। दिवि। वि। गोभिः। अद्रिम्। ऐरयत्॥ ३॥

स्कन्दस्वामीयम्।

अत्रेतिहासमाचक्षते[10] — वृत्रो महत् तमस्ततान। तेन तमसावृतं सर्वमधर्मप्रज्ञानं बभूव। तत इन्द्रो वृत्रं हत्वा तमसोऽपनोदनार्थं सूर्यं दिव्यारोह-

---

१. 'आभि' ख. पाठः. २. 'श्र', ३. 'योरश्वन्तविनीतयोरि', ४. 'इन्द्रः॥' ग. पाठः. ५. 'इत् इन्द्र ए', ६. 'व च सं', ७. 'यितोक्ति', ८. 'नयोऽपीन्द्रो', ९. 'श्रवान् हि' ख. पाठः. १०. 'ते —

वृत्रस्ततान तन्वेमाल्लो(?)कास्तत्तमसावृताः।
सर्वेऽन्धबुद्धयोऽभूवंस्तदेन्द्रस्तं जघान च॥
तदीयतमसो नुत्यै दिवि सूर्यमरोहयत्। तदे' ग. पाठः.

याश्चकारेति । तदेतदुच्यते—इन्द्रो दीर्घाय आप्रलयभाविने चक्षसे दर्शनाय आ सूर्यं रोहयत् सूर्यमारोपितवान् दिवि द्युलोके । किञ्च, विगोभिरद्रिमैरयत् । गोशब्दोऽत्र वज्रवचनः । 'अहन् गवा मघवन्' इति यथा । अद्रिरिति मेघनाम । वज्रैर्व्यैरयत् प्राणेभ्यो विगमितवान् हतवान् हन्ति वेत्यर्थः । वधार्थ एव सामर्थ्याद् ईरयतिः । अथवा गोशब्द उदकवचनः । हेतौ च तृतीया । प्रयोजनस्य हेतुत्वविवक्षा । उदकार्थं मेघं हतवान् हन्ति वेत्यर्थः ॥ ३ ॥

### वेङ्कटमाधवीयम् ।

इन्द्रो दीर्घाय । इन्द्रो मनुष्याणां चिराय दर्शनाय दिवि सूर्यमारोहयत् । तेजोभिश्च विविधं वर्षार्थं मेघं प्रेरयति ॥ ३ ॥

**इन्द्र॒ वाजे॑षु नो॒ऽव स॒हस्र॑प्रधनेषु च ।**
**उ॒ग्र उ॒ग्राभि॑रू॒तिभिः॑ ॥ ४ ॥**

**इन्द्र॑ । वाजे॑षु । नः॒ । अ॒व॒ । स॒हस्र॑ऽप्रधनेषु । च॒ । उ॒ग्रः । उ॒ग्राभिः॑ । ऊ॒तिऽभिः॑ ॥ ४ ॥**

### स्कन्दस्वामीयम् ।

हे इन्द्र! वाजेषु युद्धेषु नः अस्मान्[३] । अव रक्ष । कीदृशेषु । सहस्रप्रधनेषु । प्रधनशब्दोऽत्र न सङ्ग्रामनाम उत्कृष्टवचनः । प्रकृष्टानि धनानि प्रधनानि निमित्तभूतानि येषां ते सह स्रप्रधनाः बहुत्यन्तधना वेत्यर्थः । चशब्दस्तु पदपूरणो वा । चश्रुतिसामर्थ्याद्वा अल्पधननिमित्तकेषु चेति शेषः । उग्रः । प्रत्यक्षकृतोऽयं मन्त्रः । न चेदमामन्त्रितम् । अतो यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यतां नेयम् । यस्त्वमुग्रः अन्येन वाप्रसह्यः । क्रूर इत्यर्थः । सः अवेति । कीदृशीभिः । उग्राभिः अन्येनाप्रसह्याभिः । ऊतिभिः पालनैः ॥ ४ ॥

---

१. 'घन्', २. 'त्वचि' ख. पाठः. ३. '[illegible]' क. ख. पाठः. ४. 'त्यक्' ख. पाठः.

वेङ्कटमाधवीयम्।

इन्द्र वाजेषु। इन्द्र! क्षुद्रेषु सङ्ग्रामेष्वस्मान् रक्ष च[1]। महत्सु उग्र उद्गीर्ण उद्गुणैः पालनैः। अस्योत्तरा भूयसे निर्वचनाय ॥ ४ ॥

**इन्द्रंवयंमहाधनइन्द्रमर्भेहवामहे।**

**युजंवृत्रेषुवज्रिणम् ॥ ५ ॥**

**इन्द्रम्। वयम्। महाऽधने। इन्द्रम्। अर्भे। हवामहे। युजम्। वृत्रेषु। वज्रिणम् ॥ ५ ॥**

स्कन्दस्वामीयम्।

महाधने। सङ्ग्रामनामैतत्। महति सङ्ग्रामे। इन्द्रमेव अर्भे। अल्पनामैतत्। अल्पे। क्व। पूर्वत्र निर्देशात् सङ्ग्राम एव। हवामहे आह्वयामः। युजं युज्यतेऽसाविति युक् सहायः तम्। वृत्रेषु सङ्ग्रामव्यतिरिक्तेष्वपि च शत्रुषु इन्द्रमेव समाह्वयामः वज्रिणम् ॥ ५ ॥

वेङ्कटमाधवीयम्।

इन्द्रं वयम्[2]। इन्द्रं वयं महति सङ्ग्रामे हवामहे, इन्द्रमल्पे च स(नो[3]? हा)यमुपद्रवेषु आयुधवन्तम् ॥ ५ ॥

इति प्रथमस्य प्रथमे त्रयोदशो वर्गः ॥

---

**सनोवृषन्नमुंचरुंसत्रादावन्नपावृधि।**

**अस्मभ्यमप्रतिष्कुतः ॥ ६ ॥**

**सः। नः। वृषन्। अमुम्। चरुम्। सत्राऽदावन्। अप। वृधि। अस्मभ्यम्। अप्रतिऽस्कुतः ॥ ६ ॥**

---

१. 'श्चोद्गूर्ण उद्गूर्णैः पा, २. 'यमिति। इ', ३. न' क. पाठः.

## स्कन्दस्वामीयम् ।

न इति तादर्थ्ये चतुर्थीयं वृषन्नित्यनेन सम्बध्यते। अस्मदर्थं व(र्षीत ? र्षितः)। यो हि सर्वार्थं वर्षति वर्षत्यसौ मधुच्छन्दोर्थम्। तत एवैवमामन्त्रयते नो वृषन्निति। अमुं चरुं मेघम्। चरुरिति मेघनाम। सत्रादावन्। सत्रा इति सत्यनाम सततपर्यायो वा। सत्यसततयोर्दातः। अपावृधि उद्घाटय। अस्मभ्यम् अस्मदर्थम्। अप्रतिष्कुतः। स्कुञ् आप्रवणे। आप्रवणमागमनं प्रव(र्त ?)-तेर्गत्यर्थत्वादन्येनाप्रातिगतः अप्रतिष्कुतः। युद्धेऽभि(प्र ? यु)ञ्जानः अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः। अत्र च स नो वृषन्निति तच्छब्दान्मन्त्रस्य चास्य प्रत्यक्षकृतत्वाद् अप्रतिष्कुत इत्येतस्यानामन्त्रितत्वाद् यच्छब्दोऽध्याहार्यः। यस्त्वमप्रतिष्कुतः सोऽपावृधि ॥ ६ ॥

### वेङ्कटमाधवीयम्।

स नः। स नो वर्षितारमसुं मेघं महता दातस्तेजोभिरपावृधि शत्रुभिरप्रतिशब्दितोऽप्रतिकृतो वा। नोऽस्मभ्यमित्यनयोः पूरणमेकम्॥ ६ ॥

**तुञ्जेतुञ्जेयउत्तरेस्तोमाइन्द्रस्यवज्रिणः ।**

**नविन्धेअस्यसुष्टुतिम् ॥ ७ ॥**

**तुञ्जेऽतुञ्जे । ये । उत्ऽतरे । स्तोमाः । इन्द्रस्य । वज्रिणः । न । विन्धे । अस्य । सुऽस्तुतिम् ॥ ७ ॥**

## स्कन्दस्वामीयम् ।

तुञ्ज इति न (व ? य)ज्ञनाम। किन्तर्हि। तुञ्जतेर्दानकर्मणस्तु(ञ्जा ? ञ्जो) दानम्। दाने दाने। कस्य। सामर्थ्याद् वृष्टेः धनानां वा। य उत्तरे पूर्वेभ्यः प्रकृष्टतमा मदीयाः स्तोमा इन्द्रस्य वज्रिणः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तैरपि न विन्धे। विदेर्लाभार्थस्येदं रूपम्। अहमस्येन्द्रस्य सुष्टुतिं सुष्ठु स्तुतिम्

१. 'र्थत्वं व' ख. पाठः. २. 'सर्वार्थवर्षणमपि मधुच्छन्दोर्थमेव। त' ग. ३, 'सत्यं सततं वा दाता। अ' क. ख. पाठः. ४. 'धि मेघमपगतावरणं कुरु। अ' ग. पाठः. ५. 'तियु' क., 'तिपूर्व इ' ख. पाठः. ६. 'रं मेघममुं म', ७. 'तस्ते' क. पाठः. ८. 'वृ' ख. पाठः.

अशेषगुणप्रकाशनरूपाम् । तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । अथवायं न विन्ध इति स्पर्शनार्थो वा । (वारैपि?)[1] न विन्धे न स्पृशामि । अस्य सुष्टुतिम् अशेषप्रकाशनरूपाम् । एतदुक्तं भवति — येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमाः, तेऽपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः । किं पुनरस्येति ॥ ७ ॥

वेङ्कटमाधवीयम् ।

तुञ्जे तुञ्जे दाने दाने । उत्तरोत्तर[2]मृषय एवं[3] स्तुवन्ति । तेषु स्तोमेषु नास्याहं दानानुगुणां सुष्टुतिं विन्दामि ॥ ७ ॥

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा ।
ईशानो अप्रतिष्कुतः ॥ ८ ॥

वृषा । यूथाऽइव । वंसगः । कृष्टीः । इयर्ति । ओजसा । ईशानः । अप्रतिऽस्कुतः ॥ ८ ॥

स्कन्दस्वामीयम् ।

वृषा वर्षितेन्द्रः यूथेव वंसगः । वंसगो वृषभ उच्यते । वननीयगमनत्वात् । स यथा गोयूथानि प्रति तद्वत् । कृष्टीः यष्टॄन् शत्रून् वा मनुष्यान् प्रति इयर्ति । गतिकर्मायम् । गच्छति । ओजसा स्वबलेन ईशानः सर्वस्येश्वरः अप्रतिष्कुतः अप्रत्यागतो युद्धे नियुञ्जानः । अन्येनाप्रत्यभियुक्तपूर्व[4] इत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

वृषा यूथेव । वर्षिता गोयूथानीव वननीयगमन ऋषभ इन्द्रो वीरो युयुत्सून् मनुष्यान् बलेनाभिगच्छति । सर्वस्येशानोऽप्रतिकृतः ॥ ८ ॥

य एकश्चर्षणीनां वसूनामिरज्यति ।
इन्द्रः पञ्च क्षितीनाम् ॥ ९ ॥

---

१. 'पारैवि न', २. 'रमृ', ३. 'नं' क. पाठः. ४. 'प्रतियुक्त' ख. पाठः.

यः। एकः। चर्षणीनाम्। वसूनाम्। इरज्यति। इन्द्रः। पञ्च। क्षितीनाम् ॥ ९ ॥

## स्कन्दस्वामीयम्।

य एकः एक एव चर्षणीनां मनुष्याणां ब्राह्मणादीनां वसूनां धनानां च इरज्यति। ऐश्वर्यकर्मायम्। ईष्टे इन्द्रः। पञ्च, षष्ठ्यर्थे प्रथमैषा। पञ्चानां क्षितीनां मनुष्यजातीनां, गन्धर्वाः पितरो देवा इत्येतासाम्। यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्यैकवाक्यतां नेयम् ॥ ९ ॥

## वेङ्कटमाधवीयम्।

य एकः। य इन्द्रो मनुष्याणां पञ्चानां क्षितीनां निवसतां, गन्धर्वाः पितरो देवा असुरा रक्षांसीति पञ्चत्वं। तेषां प्रदेयानां धनानामीष्टे। पूर्वस्यामृ(षि ? चि)-वाक्यस्य समाप्तिः ॥ ९ ॥

इन्द्रंवोविश्वतस्परिहवामहेजनेभ्यः।

अस्माकमस्तुकेवलः ॥ १० ॥

इन्द्रम्। वः। विश्वतः। परि। हवामहे। जनेभ्यः। अस्माकम्। अस्तु। केवलः ॥ १० ॥

## स्कन्दस्वामीयम्।

व इति तादर्थ्ये चतुर्थी। यजमानप्रतिनिर्देशश्च। हे यजमानाः! इन्द्रं युष्मदर्थं विश्वतः सर्वेभ्यः परिहवामहे। परिशब्दो धात्वर्थानुवादी पदपूरणः। आह्वयामः। जनेभ्यः। प(ञ्च)जना निवसन्त इति मनुष्यनामसु पाठान्मनुष्यनामैतत्। अन्येभ्यो मनुष्येभ्यः। अस्माकम् अस्तु केवलः। षष्ठ्यर्थे प्रथमैषा। अस्माकं केवलानामस्तु। (न ? अ)न्येषा(म ? मा)भूत्। कः। सामर्थ्यात् स्तुत्यो यष्टव्यश्च ॥ १० ॥

---

१. 'नां मृजातीनां गन्धर्वपितृयक्षनरदेवानाम्।' ग. पाठः. २. 'षाम् अप्र', ३. 'ष्टे।', ४. 'मपि वाक्यापरिसमाप्तिः।' ख. पाठः.

वेङ्कटमाधवीयम् ।

इन्द्रं वः । व इति पञ्चमी । वो जनेभ्यः सर्वेभ्य एव वयमिन्द्रं ह्वयामहे । सोऽस्माकमस्त्वसाधारणः ॥ १० ॥

इति प्रथमस्य प्रथमे चतुर्दशो वर्गः ॥

इति प्रथमे मण्डले द्वितीयोऽनुवाकः ।

---

एन्द्र सानसिं रयिं सजित्वानं सदासहम् ।

वर्षिष्ठमूतये भर ॥ १ ॥

आ । इन्द्र । सानसिम् । रयिम् । सऽजित्वानम् । सदाऽसहम् । वर्षिष्ठम् । ऊतये । भर ॥ १ ॥

स्कन्दस्वामीयम् ।

आ इत्युपसर्गो (न्त ? भ)रेत्यनेनाख्यातेन सम्बध्यते । हे इन्द्र ! सानसिम् । वन षण सम्भक्तौ । सम्भजनीयम् । रयिं धनम् । सजित्वानं सहभूतानामपि शत्रूणां जे(तुं ? तारम्) । सदासहम् । षह मर्षणे अभिभवे छन्दसि । सर्वदा चाभिभवितृ । वर्षिष्ठं वृद्धतमम् अत्यन्तबहु । ऊतये तर्पणायास्माकम् । आभर आनय । देहीत्यर्थः ॥ १ ॥

वेङ्कटमाधवीयम् ।

एन्द्रसानसिंरयिम् । आहरेन्द्र भजनीयं रयिं जयशीलपुरुषयुक्तं सदा शत्रूणामभिभवितारं वृद्धतमं रक्षणायास्मभ्यम् ॥ १ ॥

नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै ।

त्वोतासो न्यर्वता ॥ २ ॥

नि । येन । मुष्टिऽहत्यया । नि । वृत्रा । रुणधामहै । त्वाऽऊतासः । नि । अर्वता ॥ २ ॥

## स्कन्दस्वामीयम् ।

किं कुरुथे[1] । उच्यते[2] । नि येन । नीत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः, नियतेन । येन[3] धनेन । मुष्टिहत्यया । हन्तिर्गत्यर्थः । मुष्टेर्गमनेन उपांशुपरादानेनेत्यर्थः । वृत्रा शत्रून् । निरुणधामहै अपकर्तुं प्रवृत्तानिवा(रयाम) त्वोतासः त्वया पालिताः सन्तः । न्युपसर्गाभ्यासात् तत्सम्बन्धिनो रु(णा ? णधा)म-(ना ? है) इत्याख्यातस्याप्यभ्यासः । अभ्यासे च भूयांसमर्थण्यन्ते यथा (?) .... ...........नीयेति[4] सुष्ठु निवारयाम इत्यर्थः । कीदृशेन । अर्वता । अश्वनामैतत् । सामर्थ्यादन्तर्हितमत्वर्थः । अर्वता अश्वसंसक्तेन । अथवा अर्वतेर्गतिकर्मण एतद् रूपम् । आत्मनि गते(न) स्वायत्तेनेत्यर्थः ॥ २ ॥

## वेङ्कटमाधवीयम् ।

कीदृशमित्याह — नि येनेति । येन धनेन मुष्टिहननेन दारिद्र्याणि वयं निरुन्ध्मः । पदान्तरे पुनर्निः प्रयुज्यते । त्वया रक्षिताः शत्रूंश्च येनाश्ववता निरुणधामहै तमाहरेति । अस्योत्तरा भूयसे निर्वचनाय ॥ २ ॥

**इन्द्रत्वोतासआवयंवज्रंघनाददीमहि ।**
**जयेमसंयुधिस्पृधः ॥ ३ ॥**

इन्द्र । त्वाऽऊतासः । आ । वयम् । वज्रम् । घना । ददीमहि । जयेम । सम् । युधि । स्पृधः ॥ ३ ॥

## स्कन्दस्वामीयम् ।

इन्द्र ! त्वोतासः त्वया पालिता वयं त्व(द्धा ? द्धस्तं)द्वज्रं घना घनं[6] सुवीरं ह(न्ता ? न्तृ) वा शत्रूणाम् आददीमहि गृह्णीयाम । गृहीत्वा जयेम सं सम्यग् जयेम । युधि युद्धे । कान् । स्पृधः स्पर्धितॄन् । अथवा स्पृध इति सङ्ग्रामनाम, तं करोति स्पृधयति । ण्यन्तात् क्विप् । स्पृधः सङ्ग्रामकारिण इत्यर्थः ॥ ३ ॥

---

१. 'थ इत्युच्य' क. पाठः. २. 'ते । नी' ख. पाठः. ३. 'ते', ४. 'नीययेति', ५. 'न नि', ६. 'नमस्तु' क. पाठः

### वेङ्कटमाधवीयम्।

इन्द्र! त्वोतास इति। इन्द्र! त्वया रक्षिता वयं हन्तॄ आयुधमाददीमहि। संजयेम युद्धे स्पर्धयितॄन् शत्रूनिति ॥ ३ ॥

**व॒यं शूरे॑भि॒रस्तृ॑भि॒रिन्द्र॒ त्वया॑ यु॒जा व॒यम्।**
**सा॒स॒ह्याम॑ पृतन्य॒तः ॥ ४ ॥**

**व॒यम्। शूरे॑भिः। अस्तृ॑ऽभिः। इन्द्र॑। त्वया॑। यु॒जा। व॒यम्। सा॒स॒ह्याम॑। पृ॒त॒न्य॒तः ॥ ४ ॥**

### स्कन्दस्वामीयम्।

वयं शूरेभिः शूरैः आत्मीयैर्मनुष्यैः अस्तृभिः। स्तृणातिः सामर्थ्याद् हिंसार्थः। अहिंसितैः। हे इन्द्र! त्वया च युजा सहायेन वयम्। सहयोगलक्षणतृतीयार्थे व्यत्ययेन प्रथमैषा पृतन्यत इत्यनेन सम्बध्यते। अस्माभिः सह पृतन्यतः सङ्ग्रामं कर्तुमिच्छतः सासह्याम अत्यर्थं पुनः पुनर्वाभिभवेम ॥ ४ ॥

### वेङ्कटमाधवीयम्।

वयं शूरेभिः। वयं शूरैरायुधानां क्षेप्तृभिः त्वया च सहायेनाभिभवेम सङ्ग्रामं कर्तुमिच्छतः। पुनर्वयमिति पूरणम् ॥ ४ ॥

**म॒हाँ इन्द्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑।**
**द्यौर्न प्र॑थि॒ना शवः॑ ॥ ५ ॥**

**म॒हान्। इन्द्रः॑। प॒रः। च॒। नु। म॒हि॒ऽत्वम्। अ॒स्तु॒। व॒ज्रिणे॑। द्यौः। न। प्र॒थि॒ना। शवः॑ ॥ ५ ॥**

### स्कन्दस्वामीयम्।

इन्द्रः[३] महान् शरीरेण परश्च उत्कृष्टश्च सर्वतो गुणैः। नु इति पदपूरणः। महित्वं महत्त्वं चैतत् सर्वदा अस्तु वज्रिण इन्द्रायेत्येतद् इन्द्रा-

१. 'तृभि', २. 'न नाभि' क. पाठः. ३. 'न्द्रः श्च' क. ख. पाठः.

(वा ? या )शास्महे । द्यौर्न । नशब्द उपरिष्टादुपचारः सर्व(तो ? त्रो)पमा (यं ? यां), द्युलोक इव च । प्रथिना प्रथिम्ना विस्तीर्णत्वेन । शवः इन्द्रस्य बलं सेनालक्षणं, यथा द्यौर्विस्तीर्णा तद्वद् विस्तीर्णमित्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

महाँ इन्द्रः । महनीय इन्द्रस्तारकश्च शत्रूणां तस्मै सदा महित्वमस्त्विति स्वयं चाशास्ते । द्यौरिव विस्तीर्णतया बलमस्य भवति ॥ ५ ॥

इति प्रथमस्य प्रथमे पञ्चदशो वर्गः ॥

---

समोहेवायआशतनरस्तोकस्यसनितौ ।
विप्रासोवाधियायवः ॥ ६ ॥

सम्ऽओहे । वा । ये । आशत । नरः । तोकस्य । सनितौ । विप्रासः । वा । धियाऽयवः ॥ ६ ॥

स्कन्दस्वामीयम् ।

समोह इति सङ्ग्रामनाम । वाशब्दा(र्थे ? र्थः) समुच्च(ये ? य ) । परापेक्षया च समुच्चयः । सङ्ग्रामेषु च आशत व्याप्नुवन्ति । कम् । प्रकरणाद् इन्द्रम् । केन । सामर्थ्यात् स्तुतिभिः । इन्द्रं स्तुवन्तीत्यर्थः । नरः मनुष्याः । तोकस्य । अपत्यनामैतत् । अपत्यस्य च । सनितौ सम्भक्तौ लाभे । विप्रासः मेधाविनः । वा धियायवः । वाशब्दः परस्ताद् द्रष्टव्यः । धियायवो वा प्रज्ञाकामाश्चेत्यर्थः । किं तेषामिति साकाङ्क्षत्वाद् वाक्यस्य निराकाङ्क्षीकरणार्थं तेषां यथास्वमभिलषितं लभन्त इति वाक्यशेषः । अथवा समोहे वा य इत्यत्रैव यच्छ्रुते(रे)त-(दे ? द्दे)शयोग्यार्थाध्याहारः, तच्छब्दाध्याहारश्च । सङ्ग्रामे य इन्द्रं स्तुवन्ति, ते आशत व्याप्नुवन्ति मनुष्याः । (किं ? के) । सामर्थ्यात् तत्र यजन्तः (तो)-कस्य सनितौ धियायवश्च प्रज्ञाः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

समोहे वा । सङ्ग्रामजिगीषया य एनं युद्ध आप्नुवन्ति मनुष्या अपत्यस्य वा भजनार्थम् । ये वा प्राज्ञाः कर्मकामाः उत्तरत्र सम्बन्धः ॥ ६ ॥

यःकुक्षिःसोमपातमःसमुद्रइ॑वपिन्वते ।
उर्वीरापोनकाकुदः ॥ ७ ॥

यः । कुक्षिः । सोमऽपातमः । समुद्रःऽइव । पिन्वते । उर्वीः । आपः । न । काकुदः ॥ ७ ॥

स्कन्दस्वामीयम् ।

यः इन्द्रस्यावयवभूतः कुक्षिराकारैकदेशः । सोमपातमः अतिशयेन सोमानां पाता । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स समुद्र इव पिन्वते । (मि ? पिवि रि)ह सेचने । कर्मणि चायं व्यत्ययेन । यथा नदीभिः समुद्रस्तद्वत् पिन्वते सिच्यते अस्माभिः । केन। सामर्थ्यात् सोमेन । उर्वीरापो न । द्वितीयेयमुपमा । तृतीयार्थे चात्र प्रथमा । बह्वीभिरद्भिरिव च । काकुदः । काकुदं ताल्वित्याचक्षते । व्यत्ययेन चात्र पुलिङ्गता । यथा तृषितस्य कस्यचिद् बह्वीभिरद्भिस्तालु सिच्यते, तद्वच्चेत्यर्थः । केचित् तु वारुणं काकुदमत्रोपमानमित्या(ह ? )हुः । (त)द्ध्यतिशयेन बह्वीभिः सिच्यते वरुणस्यापामधिदैव(त्व ? )तत्वात् ॥ ७ ॥

वेङ्कटमाधवीयम् ।

यः कुक्षिः । तेभ्यः सर्वेभ्यस्तांस्तान् कामान् योऽस्य कुक्षिरतिशयेन सोमस्य पातमः समुद्र इव सदाक्षीण उद्गमयति । स कुक्षिर्बह्वन्युदकानि पिबंस्तालिव भवति । तद्धि निष्ठीवनेऽपि न शुष्यति इति ॥ ७ ॥

एवाह्य॑स्यसूनृताविरप्शीगोमतीमही ।
पक्वाशाखानदाशुषे ॥ ८ ॥

एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न । दाशुषे ॥ ८ ॥

स्कन्दस्वामीयम् ।

एवशब्दः एवमित्यस्यार्थे पक्वा शाखा नेत्येतस्माच्च परो द्रष्टव्यः । हिशब्दस्तु पदपूरणः । अस्य इन्द्रस्य सूनृता सर्वकामधु(नु ? क्) । इन्द्रस्य

स्वं(सू)ता धेनुः सूनृताशब्देनोच्यते । सा विरप्शी । रप लप व्यक्तायां वाचीत्यस्य क्रियाशब्दोऽयम् । न महन्नामैतत् । महीत्यन्यस्यात्र (म)हन्नाम्नो विद्यमानत्वात् सूनृतासामानाधिकरण्याच्च अस्य स्त्रीप्रत्ययान्तत्वाद् विरप्शिने वज्रिणे इत्यादिप्रयोगदर्शनाच्च इमत्ययान्तस्य महन्नामसु पाठात् । विरपणशीला शब्दकारिणी । गोमती अथापि तद्धितेन कृत्स्नमन्निगमा भवन्तीत्येवं पयोऽत्र गोशब्देनोच्यते । गोभिः श्रीणीत इति यथा । पयस्वती । (मही) महती । पक्वा शाखा न एव । पक्वानि फलानि यस्याः सा शाखेव पक्वेत्युच्यते । नशब्दश्चोपमार्थीयः अन्यत्रोपमानोपमेयगतधर्मप्रतिनिर्देशा(र्थ्ये ? र्थे)योर्यथा एवमित्येतयोरप्यर्थे वर्तते । अग्निं न ये यथा ........... भ्राजसा रुक्मवक्षस इत्यर्थः । इह त्वेवशब्दस्य श्रुतत्वाद् यथाशब्दमात्रार्थे । उपमानोपमेययोश्च सूनृतयोः साधार(ण)धर्मापेक्षत्वात् तत्सम्बन्धयोग्यपदाध्याहारः । यथा पक्वा शाखा रसबि(न्दु ? न्दुं) क्षत्येव (रक्ष ? क्षर)ति । किम् । सामर्थ्यात् पयः सर्वकामान् । पयस्वती हि सा सर्वकामधुक् । (त ? क)स्मै क्षरति । दाशुषे । (षष्ठ्यर्थे) एषा चतुर्थी । दाशुषे यजमानस्यार्थाय । अथवा सूनृता गर्जितलक्षणा वाक् । गोमती माध्यमिका । आपोऽत्र गाव उच्यन्ते । यस्य गा अन्तरश्मन इति यथा । तद्वती । सा च पक्वेव शाखा क्षरति । किम् । सामर्थ्यात् पयः दधते ॥ ८ ॥

वेङ्कटमाधवीयम् ।

एवा ह्यस्य । एवं ह्यस्य वाग् विविधरपणा पशुमती महती पक्वफलशाखेव यजमानाय भवति ॥ ८ ॥

एवाहिते॑विभू॑तयऊ॒तय॑इन्द्र॒माव॑ते ।

स॒द्यश्चि॒त्सन्ति॑दा॒शुषे॑ ॥ ९ ॥

ए॒व । हि । ते॒ । विऽभू॑तयः । ऊ॒तयः॑ । इ॒न्द्र॒ । माऽव॑ते । स॒द्यः । चि॒त् । सन्ति॑ । दा॒शुषे॑ ॥ ९ ॥

---

१. 'स्वं' ख. पाठः.

स्कन्दस्वामीयम्।

एवेत्येवमर्थे प्रकृते सूनृतापेक्षश्च। हीति पदपूरणः। यथैवं ते तव स्वभूता विभूतयः ऐश्वर्याणि ऊतयः पालनानि च हे इन्द्र! मावते सद्यश्चित् सन्ति दाशुषे। माशब्दोऽत्र मच्छब्दे। प्रथाच्छन्द इति छन्दःशब्दसामानाधिकरण्यच्छिन्दोविशेषवचनः, तद्वान् मावान्। मत्सदृशो वा। मतुप्प्रकरणेषु[1] 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्यानमि'ति। मावते दाशुष इति चोभयत्र तादर्थ्ये चतुर्थी। चिच्छब्द एवार्थे। छन्दोविशे(षो?ष)वतो मत्सदृशस्य वा यजमानस्यार्थाय। सन्ति भवन्ति। यदैव मत्सदृशो यजमानः स्वार्थायार्थयते, तदैव तदर्था भवन्ति॥ ९॥

वेङ्कटमाधवीयम्।

एवाहिते। एवं हि ते विभूत(ये?यो) रक्षणानि च मत्सदृशाय यजमानाय तदानीमेव भव(ति?न्ति)॥ ९॥

**एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या।**
**इन्द्राय सोमपीतये॥ १०॥**

**एव। हि। अस्य। काम्या। स्तोमः। उक्थम्। च। शंस्या। इन्द्राय। सोमऽपीतये॥ १०॥**

स्कन्दस्वामीयम्।

...........................तदैव आत्मीयः स्तोम उक्थं च स्तोत्रं च शस्त्रं च शंस्या आ समासेः शंसनीये। किमर्थम्। अस्मा एवेन्द्राय सोमपीतये सोमाप्त्युत्तरकालं कथमयमिन्द्र(ः) सोमं पिबे(दि)त्येवमर्थमित्यर्थः॥ १०॥

वेङ्कटमाधवीयम्।

एवाह्यस्य। यथा[2] मह्यस्य शंसिषमेवमस्य कमनीये स्तोत्रशस्त्रे शंसनीये सोमपानार्थमिन्द्राय। विरम्याभिधानात् षष्ठीचतुर्थ्यौ सङ्गच्छेते। अर्थाभेदादित्यपरमिति॥ १०॥

इति प्रथमस्य प्रथमे षोडशो वर्गः॥

---

१. 'णे यु' ख. पाठः. २. 'थाह्यस्यामशं' क. पाठः.

इन्द्रेहिमत्स्यन्धसोविश्वेभिःसोमपर्वभिः।
महाँअभिष्टिरोजसा ॥ १ ॥

इन्द्र। आ। इहि। मत्सि। अन्धसः। विश्वेभिः। सोमपर्व-ऽभिः। महान्। अभिष्टिः। ओजसा ॥ १ ॥

स्कन्दस्वामीयम्।

हे इन्द्र! आ इहि आगच्छ। आगत्य च मत्सि मन्दस्व तृप्य[1]। अन्धसः। अन्ध इत्यन्ननाम। तृतीयार्थे चेयं षष्ठी। अन्नेन। कतमेन। विश्वेभिः सोमपर्वभिः सर्वैः सोमविशेषैः यानि त्वदर्थमभिषुतानि सोमाख्य-स्यान्नस्य पर्वाणि, तैः सर्वैरित्यर्थः। अथवा सोममयानि पर्वाणि येषां ते सोम-पर्वाणः देवाः। यो हि यदाहारो भवति, तस्य तन्मयानि पर्वा(णि) भवन्ति। सोमाहाराश्च देवाः। सहयोगलक्षणा चात्र तृतीया। तृप्य सोमलक्षणेनान्नेन सर्वैः सोमाहारैर्देवैः सहेत्यर्थः। किं कारणम्। उच्यते। यस्मान्महांस्त्वं वीर्येण शरीरेण वा। अभिष्टिः अ(भेष? भिषे)णशीलश्च शत्रूणाम्। अभि-यष्टव्यो वा। केन हेतुना। ओजसा बलेन बलवत्त्वादित्यर्थः। अथवा यस्त्वं महानभिष्टिश्च स (र्थि? मत्सी)त्येवं यच्छब्दतच्छब्दावध्याहृत्यैकवाक्यता योज्या ॥ १ ॥

वेङ्कटमाधवीयम्।

इन्द्रेहि। इन्द्रागच्छ माद्य चान्नेन विश्वैः सोमकृतापर्वभिरभिषुतेन महान् बलेन शत्रूणामभिभवनशीलः ॥ १ ॥

एमेनंसृजतासुतेमान्दिमिन्द्रायमन्दिने।
चक्रिंविश्वानिचक्रये ॥ २ ॥

आ। ईम्। एनम्। सृजत। सुते। मन्दिम्। इन्द्राय। मन्दिने। चक्रिम्। विश्वानि। चक्रये ॥ २ ॥

१. 'प्यस्व अ' क. पाठः.

## स्कन्दस्वामीयम् ।

आ इत्युपसर्गः सृजतेत्याख्यातेन सम्बन्धयितव्यः । ईमिति पदपूरणः । एनं सोमम् आसृजत । सृजतिरत्र दानार्थः । (केव)लोऽपि (दविद्धि ? वि)सृजतीत्युच्यते । अध्वर्यूणां चायं प्रैषः । दत्त यूयमध्वर्यवः । सुते । द्वितीयार्थे सप्तमीयम् । अभिषुतम् । अथवा सुत इति स्वार्थ एव सप्तमी । सृजतिस्तु प्रक्षेपणार्थः । प्रक्षिपतैनं सोममन्यस्मिन् ग्रहचम(से ? स)-स्थे(यन्प्रते ?) पुनरभ्युन्नयतेत्यर्थः । कीदृशम् । मन्दिं तर्पयितारम् । कस्मै इन्द्राय । सम्प्रदाने तादर्थ्ये चतुर्थीयम् । इन्द्राय दत्त(म् ?) इन्द्राय वाभ्युन्नयत । कीदृशाय । मन्दिने तर्पयित्रे (तर्पयि)तव्याय वा । कीदृशम् । (किं ? चक्रि) ताच्छील्येऽ(यकं ? यं किन्) । स्वकार्यकरणशीलम् । कीदृशाय । विश्वानि चक्रये सर्ववृष्ट्यादिकर्मकरणशीलाय ॥ २ ॥

### वेङ्कटमाधवीयम् ।

एमेनम् । आसृजत एनं सोमं सुते ईमिति पूरणम् । तर्पयितारमिन्द्राय तर्पयित्रे । विश्वस्य कर्मणः कर्तारः । विश्वानि कर्माणि चक्रये । 'न लोकाव्यये'ति षष्ठी प्रतिषिद्धा ॥ २ ॥

मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे ।
सचैषु सवनेष्वा ॥ ३ ॥

मत्स्व । सुऽशिप्र । मन्दिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु । सवनेषु । आ ॥ ३ ॥

## स्कन्दस्वामीयम् ।

मत्स्व (मस्व ?) मोदस्व स्तूयस्व वेत्यर्थः । हे सुशिप्र ! । शिप्रशीप्रे हनू नासिके वा । सुहनो ! सुनस ! वा । कीदृशैः । मन्दिभिः मोद(यत्री ? यितृ)भिः स्तावकैर्वा । कैः । स्तोमेभिः स्तवनैः । हे विश्वचर्षणे ! । पश्यतिकर्मायम् । सर्व(स्वपि ? स्यापि) (दृष्ट ? द्रष्टः) । सचा सह । केन । सामर्थ्यात् स्वैर्मरुद्भिः । क । एषु सवनेषु । सवन इति यज्ञनाम । एतेषु यज्ञेषु प्रातःसवनमाध्यन्दिन-तृतीयसवनेषु वा । आकारः पदपूरणः ॥ ३ ॥

---

१. 'नं ससा' व. पा०. २. [illegible] ३. [illegible]

वेङ्कटमाधवीयम्।

मत्स्वा सुशिप्र। मन्दस्व सु(वा?ह)नो! मादयितृभिः स्तोमैः सर्वस्य द्रष्टः! सहास्माभिरेषु सवनेषु। आकारः सहस्यर्थे स्फुटीकरोति॥ ३॥

**असृग्रमिन्द्रतेगिरःप्रतित्वामुदहासत।**

**अजोषावृषभंपतिम्॥ ४॥**

**असृग्रम्। इन्द्र। ते। गिरः। प्रति। त्वाम्। उत्। अहासत।**

**अजोषाः। वृषभम्। पतिम्॥ ४॥**

स्कन्दस्वामीयम्।

असृग्रं सृष्टवा(हन?नह)म्। हे इन्द्र! ते तव गिरः स्तुतीः। ताश्च सृष्टाः सत्यः प्रति त्वामुदहासत। 'ओहाङ् गतौ'। स्वर्व्यवस्थितं त्वां प्रतीतो लोकादूर्ध्वं गताः। अजोषाः सेवितवानसि। कीदृशं (मा?त्वा)मुदहासत, वृषभं वर्षितारं पतिं स्वामिनं सर्वस्य॥ ४॥

वेङ्कटमाधवीयम्।

असृग्रमिन्द्र। असृजमिन्द्र! ते स्तुतीः। सृष्टाश्च तास्त्वां प्रत्युद्गच्छ(तु?न्तु)[1]। त्वं च सेवितवानसि स्तुतीनां वर्षितारं मां स्तोमानामीश्वरम्॥ ४॥

**संचोदयचित्रमर्वाग्राधइन्द्रवरेण्यम्।**

**असदित्तेविभुप्रभु॥ ५॥**

**सम्। चोदय। चित्रम्। अर्वाक्। राधः। इन्द्र। वरेण्यम्।**

**असत्। इत्। ते। विऽभु। प्रऽभु॥ ५॥**

स्कन्दस्वामीयम्।

संचोदय प्रेरय चित्रम् अर्वाग् अस्मान् प्रति अस्मभ्यं देहीत्यर्थः। किं, राधः धनम्। हे इन्द्र! कीदृशं, वरेण्यं वरणीयम् अत्यन्तोत्कृष्टम्। किं

---

१. 'न्' क. पाठः.

कारणम् । उच्यते । असदित् । लडर्थेऽयं पञ्चमो लकारः । इच्छब्दोऽपि यस्मादर्थे । अस्ति यस्मात् । ते तव विभु प्रभु विभूतं च प्रभूतं च धनम् । यावता कार्यं साध्यते, तद् विभु । ततोऽतिरिक्तं प्रभु । यस्मादत्यन्तप्रभूतधनोऽसीत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

संचोदय । सह प्रेरय पूजनीयं धनमस्मदभिमुखमिन्द्र ! वरणीयम् । अस्ति हि ते विभु च प्रभु च धनम् ॥ ५ ॥

इति प्रथमस्य प्रथमे सप्तदशो वर्गः ॥

---

अस्मान्त्सु तत्र चोदयेन्द्र राये रभस्वतः ।
तुविद्युम्न यशस्वतः ॥ ६ ॥

अस्मान् । सु । तत्र । चोदय । इन्द्र । राये । रभस्वतः ।
तुविऽद्युम्न । यशस्वतः ॥ ६ ॥

स्कन्दस्वामीयम् ।

अस्मान् सुष्ठु तत्र चोदय हे इन्द्र ! राये धनार्थम् । क्व सामर्थ्याद् यत्र गते धनं लभ्यते । कीदृशा(न्? न्) । रभस्वतः । क्षिप्रमित्यर्थः । तुविद्युम्न ! । तुवीति बहुनाम । द्युम्नं धनं वा यशो वा अन्नं वा । बहुधन ! बहुयशः ! बह्वन्न ! वा । यशस्वतः । यश इत्यन्ननाम । हविर्लक्षणेनान्नेनान्नवतः । यष्टॄनित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

अस्मान् । अस्मान् सुष्ठु[२] तत्र चोदय यत्र धनं लभ्यते । इन्द्र ! धनार्थं वेगवतः स्तुतिप्रवृत्तानपि[३] युद्धोद्युक्तान् बह्वन्न ! हविष्मतः ॥ ६ ॥

सं गोमदिन्द्र वाजवदस्मे पृथु श्रवो बृहत् ।
विश्वायुर्धेह्यक्षितम् ॥ ७ ॥

सम् । गोऽमत् । इन्द्र । वाजऽवत् । अस्मेइति । पृथु । श्रवः ।
बृहत् । विश्वऽआयुः । धेहि । अक्षितम् ॥ ७ ॥

---

१. 'क्व तत्र सा' ख. पाठः. २. 'ष्ठु चो', ३. 'पि वा यु' क. पाठः.

## स्कन्दस्वामीयम् ।

समित्युपसर्गो धेहीत्याख्यातेन सम्बन्धयितव्यः । गो(मान् ? मत्) गावो यस्मिन् सन्ति, त (तं ? त्) गोमत् । गोभिः सहितम् । हे **इन्द्र** ! । वाजवद् अन्नेन च सहितम् । अस्मे अस्मभ्यम् । पृथु विस्तीर्णं प्रभूतं श्रवः । धनना-मैतत् । धनम् । बृहत् महत् सारव(तः ? त्) । विश्वायुः । आयुर्जीवितम् । तेन च सर्वेण सहितं संधेहि सम्यग् देहि । अक्षितम् अहिंसितं, केनचिदपि हिंसितुमशक्यम् ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

सङ्गोमत् । गोमद् बलवच्चास्मासु विस्तीर्णं परिबृह[1](न्तमु ? दु)च्छ्रितमन्नं धेहि सर्वा[2]युस्त्वमक्षीणम् ॥ ७ ॥

**अस्मेधेहिश्रवोबृहद्द्युम्नंसहस्रसातमम् ।**

**इन्द्रतारथिनीरिषः ॥ ८ ॥**

**अस्मे इति । धेहि । श्रवः । बृहत् । द्युम्नम् । सहस्रऽसातमम् । इन्द्र । ताः । रथिनीः । इषः ॥ ८ ॥**

## स्कन्दस्वामीयम् ।

अस्मभ्यं देहि । किं, श्रवो बृहत् । श्रवोऽत्र कीर्त्तिरुच्यते । कीर्तिं मह-तीम् । द्युम्नं धननामात्र । द्युम्नं धनं च । कियत्, सहस्रसातमं सहस्रसङ्ख्याना-मतिशयेन सम्भक्तृ, बहुसहस्रसङ्ख्यातमित्यर्थः । [3]नच केवले कीर्तिधने । किं तर्हि । हे इन्द्र ! ता रथिनीरिषः । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दो-ऽत्राध्याहर्तव्यः । या वयमर्थयामहे या अन्येभ्योऽपि स्तोतृभ्यो ध(र्थो ? त्से) ता रथिनी रथसहिताः इषः अन्नानि ॥ ८ ॥

## वेङ्कटमाधवीयम् ।

अस्मे धेहि । अस्मासु धेहि । बृहदन्नं द्योतमानमनेकपुरुषसम्भक्तृदत्ता[4]नि तान्यन्नानि कुरु रथयुक्तानि ॥ ८ ॥

---

१. 'ह्वमु' क. पाठः. २. 'न्न' ख. पाठः. ३. 'न के', ४. 'नि च ता' क. पाठः.

वसोरिन्द्रंवसुपतिंगीर्भिर्गृणन्तऋग्मियम्।
होमगन्तारमूतये॥ ९॥

वसोः। इन्द्रम्। वसुऽपतिम्। गीःऽभिः। गृणन्तः। ऋग्मियम्। होम। गन्तारम्। ऊतये॥ ९॥

### स्कन्दस्वामीयम्।

वसोरिति षष्ठीनिर्देशादर्थायेति शेषः। धनस्यार्थाय इन्द्रं वसुपतिं धनानां स्वामिनं गीर्भिः स्तुतिभिः गृणन्तः स्तुवन्तः। ऋग्मियम्। 'ऋच स्तुतौ'। अर्चना ऋक्। सम्पदादित्वात् क्विप्। तद्वन्तं, स्तुतियोग्यमित्यर्थः। होम आह्वयाम (स?स्व)यज्ञे। गन्तारं यज्ञं प्रति ऊतये सोमेन तर्पणाय। अथवा वसोरिति वसुपतीत्येतदपे(क्षै?क्ष्यै)व। वसुपतिशब्दस्तु यद्यपि वसूनां पतिर्वसुपतिरित्येवं व्युत्पद्यते, तथाप्यत्र स्वामिनमाह। धनस्यैव स्वामिनम्। तद् यथा — प्रवीणशब्दः प्रकृष्टो वीणायामित्येवं व्युत्पद्यते। अथच प्रवीणो व्याकरणे प्रवी(णो वी)णा(या)मिति च प्रयोगदर्शनात् प्रकृष्टमात्रमाह — वीणायां वीणायामेव प्रकृष्टम्। वसोर्वसुपतिं धनस्य स्वामिनम् इन्द्रमाह्वयाम। ऊतये पालनायात्मनः॥ ९॥

### वेङ्कटमाधवीयम्।

वसोरिन्द्रं। वसोर्वसुपतिमिन्द्रं स्तुतिभिः स्तुवन्त ऋगर्हमाह्वयामो वयं गन्तारं रक्षणाय॥ ९॥

सुतेसुतेन्योकसेबृहद्बृहतएदरिः।
इन्द्रायशूषमर्चति॥ १०॥

सुतेऽसुते। निऽओकसे। बृहत्। बृहते। आ। इत्। अरिः। इन्द्राय। शूषम्। अर्चति॥ १०॥

### स्कन्दस्वामीयम्।

अभिषुते सोमे। न्योकसे। ओको नियतवासस्थानम्, एतन्नियतं यस्य सोम एव नान्यत् स न्योकाः। सर्वत्र चात्र बलविशेषणत्वात् षष्ठ्यर्थे

चतुर्थी । न्योकसः नियतसोमाख्यस्थाननिवास(स्य) स्वभूतं बृहद् महत्। बृहते महते महतः शरीरेण वीर्येण वा । आ इ(दि)ति पदपूरणौ । अरिः ईश्वरः । स्तुत्युच्चारणे समर्थ इत्यर्थः । इन्द्राय इन्द्रस्य । शूषं बलम् । अर्चति स्तौति । सर्वस्तोता आत्मानमेवापरोक्षरूपेण प्रथमपुरुषेण प्रतिनिर्दिशति । अहं स्तौमीत्यर्थः । अथवा न्योकसे बृहते इन्द्रायेति स्वार्थ एव तादर्थ्ये चतुर्थी । सुते सुत इति च सम्बध्यते । इन्द्रार्थमभिषुते सोमे महद् बलं स्तौति । कस्य, सामर्थ्यात् (कस्य ?) सन्निधेश्चेन्द्रस्य ॥ १० ॥

## वेङ्कटमाधवीयम् ।

सुते सुते । सर्वेषु सुतेषु न्योकस आत्मीयगृहबुद्धिं कुर्वते महद् बलं महत इन्द्रायैव । स्तोमानां प्रेरयिता स्तोता वदति ॥ १० ॥

इति प्रथमस्य प्रथमेऽष्टादशो वर्गः ॥

---

गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः
ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे ॥ १ ॥

गायन्ति । त्वा । गायत्रिणः । अर्चन्ति । अर्कम् । अर्किणः । ब्रह्माणः । त्वा । शतक्रतो इति शतऽक्रतो । उत् । वंशम् ऽइव । येमिरे ॥ १ ॥

## स्कन्दस्वामीयम् ।

गायतिरर्चतिकर्मा । स्तुवन्ति त्वा गायत्रिणः । गायत्रं साम, तद्वन्त उद्गातारः । नच त एव केवलाः । किन्तर्हि । अर्चन्ति स्तुवन्ति अर्कं नवं त्वाम् अर्किणः । मन्त्रोऽत्रार्क उच्यते । तद्वन्तः होतारोऽपि । ब्रह्माणः ब्रह्मैकर्त्विक् । तत्पुरुषांस्तु ब्राह्मणाच्छंस्यादीनपेक्ष्येदं बहुवचनम् । ब्रह्माणोऽपि त्वा हे शतक्रतो! बहुकर्मन्! बहुप्रज्ञ! वा । उद्वंशमिव येमिरे यथा (किश्चि? कश्चि)द् वंशमुद्यच्छेद्, एवमुद्यच्छन्ति उत्क्षिपन्ति, उच्छ्रयन्तीत्यर्थः ।

वीर्यवृद्धिश्चात्रोच्छ्रायोऽभिप्रेतः । स्तूयमाना हि देवता वीर्येण वर्धन्ते । सर्वर्त्विजः स्वैः स्वैः स्तोत्रैस्त्वां स्तुवन्तीति समस्तार्थः ॥ १ ॥

### वेङ्कटमाधवीयम् ।

गायन्ति त्वा । गायन्ति त्वामुद्गातारः । अर्चन्त्यर्चनीयं होतारः । इत्थमुभये ब्राह्मणास्त्वां शतक्रतो! वंशमिव बहुभिः स्तोत्रशस्त्रैरुद्यच्छन्ति ॥ १ ॥

**यत्सानोःसानुमारुहद्भूर्यस्पष्टकर्त्वम् ।**
**तदिन्द्रोऽअर्थंचेततियूथेनवृष्णिरेजति ॥ २ ॥**

**यत् । सानोः । सानुम् । आ । अरुहत् । भूरि । अस्पष्ट । कर्त्वम् । तत् । इन्द्रः । अर्थम् । चेतति । यूथेन । वृष्णिः । एजति ॥ २ ॥**

### स्कन्दस्वामीयम् ।

यदभ्रं सानोः सानुं सारसमुच्छ्रि(त ? तम्) उच्चाद् गिरिशिखरादन्यदुच्चतरं गिरिशिखरम् आरुहद् आरोहति । आरुह्य च भूरि बहु अस्पष्ट । 'स्पश बन्धने' । शुद्धोऽपि च सोपसर्गार्थे द्रष्टव्यः । प्रतिबध्नाति । कर्त्वं कर्म । कर्त्वमिति हि कर्मनाम । वृष्टिं ह्यभ्रं नि(र ? रु)द्धं तदायत्तानि सर्वकर्माणि प्रतिबध्नाति । तदिन्द्रः अर्थम् । अर्तेर्गतिकर्मण एतद् रूपम् । गमनशीलं न परमपि चेतति जानाति । ज्ञात्वा च यूथेन । समुदायसामान्यान्मरुद्गणोऽत्र यूथमुच्यते । सहयोगलक्षणा चात्र तृतीया । मरुद्गणेन सह । वृष्णिः वर्षिता । एजति गतिकर्मायम् । वधार्थं गच्छति । अथवा ('जू ? एजृ) कम्पन' इत्येतस्यान्तर्णीतण्यर्थस्यैतद् रूपम् । एजयति कम्पयति । उदकशोधनार्थं धूनयतीत्यर्थः ॥ २ ॥

### वेङ्कटमाधवीयम् ।

यत् सानोः । यदार्थलिप्सुः स्तोता सन् मनुष्यो गिरेर्गिरिमारोहति यदा वा भूरि कृष्यादिकं कर्म स्पृशति तदानीं तस्याभिलषितमर्थमिन्द्रो जानाति । ज्ञात्वा च वसुसमूहेन मरुद्गणेन वा सह वर्षशीलस्तत्समीपमागच्छति ॥ २ ॥

युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा ।
अथानइन्द्रसोमपागिरामुपश्रुतिंचर ॥ ३ ॥

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा । अथ । नः । इन्द्र । सोमऽपाः । गिराम् । उपऽश्रुतिम् । चर ॥ ३ ॥

स्कन्दस्वामीयम् ।

युक्ष्वाहि नियुङ्क्ष्व स्वरथे केशिना (केशिना?) केश(व)न्तौ प्रलम्बकेसरौ हरी आत्मीयावश्वौ । वृषणा । 'वृषु (हृ? मृ)षु सेचने' । रेतस्सेचनसमर्थौ, तरुणावित्यर्थः । कक्ष्यप्रा । कक्ष्या रज्जुरश्वस्य, यया पर्याणमुरसि बध्यते । प्रा पूरणे । कक्ष्यायाः पूरयितारौ, मांसपूर्णशरीरावित्यर्थः । अथ अनन्तरं च नः अस्माकं स्वभूतानां हे इन्द्र! सोमपाः सोमानां पातः गिरां स्तुतीनाम् उपश्रुतिं श्रुतेः समीपं चर गच्छ । यत्रास्मदीयाः स्तुतीः शृणोषि, तत्रागच्छेत्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

युक्ष्वाहि । योजय प्रशस्तकेशावश्वौ तरुणौ मेदुरतया[२] कक्ष्यायाः पूरयितारौ । अथास्माकमिन्द्र! सोमस्य पातः! स्तुतीनामुपश्रुतिं चर ॥ ३ ॥

एहिस्तोमाँअभिस्वराभिगृणीह्यारुव ।
ब्रह्मचनोवसोसचेन्द्रयज्ञंचवर्धय ॥ ४ ॥

आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव । ब्रह्म । च । नः । वसो इति । सचा । इन्द्र । यज्ञम् । च । वर्धय ॥ ४ ॥

स्कन्दस्वामीयम् ।

एहि आगच्छ । आगत्य च स्तोमान् अभिस्वर । अन्यत्र 'स्वृ शब्दोप-

१. 'ता' क. पाठः.　२. 'श्रवणं च' क. ग. पाठः.

तापयोः' । इह तु सामर्थ्याद् गत्यर्थः । अस्मदीयाः स्तुतीरभिगच्छ । अथवा स्वरतिः शब्दार्थ एव । स्तोमानित्येतच्च एहीत्यनेन सम्बध्यते । एह्यस्मदीयान् स्तोमान् प्रति । आगत्य चाभिस्वर अभिशब्दयास्मान् आगच्छत स्तोतारः!, आगतोऽहं, स्तुत, किमतः परमाध्वे इति । अभिस्वृत्य च अभिगृणीहि । अभीत्ययं प्रतीत्येतस्य स्थाने । प्रतिगृणीहि । आरुव च शब्दय च । किं, सामर्थ्याच्छस्त्रं चोच्चारयेत्यर्थः । हेतुकर्तृतया चोभयत्रापि इन्द्रस्य कर्तृत्वम् । प्रतिगृणन्तमध्वर्युं शंसन्तं च मां प्रयुङ्क्ष्वेत्यर्थः । एतत् कुर्वन् ब्रह्म च स्तुतिलक्षणं नः अस्माकं स्वभूतम् । वसो । शतपथे वसिष्ठ इति वसुशब्दस्यातिशयितप्रत्ययान्तस्य 'यद्वैनः श्रेष्ठस्तेन वसिष्ठ' इति प्रशस्यत(मेन म?)मवचनेन श्रेष्ठशब्देनार्थविवरणदर्शनाद् वसुशब्दः प्रशस्यनाम । प्रशस्य! । अथवा वस्विति धननाम । सामर्थ्याचान्तर्णीतमत्वर्थम् । धनव(त्?न्!) । सचा सह हे इन्द्र! यज्ञं च वर्धय समापय । स्तुतियज्ञयोर्हि समाप्तिरेव वृद्धिः ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

एहि स्तोमान् । आगच्छ स्तोमान् अस्मदीयान् सशब्देन मुखेन पुनःपुनः प्रोत्साहय । 'ओथामो दैवे'[1]त्यभिगृणीहि प्रतिगृणन्तमध्वर्युं शंसन्तं मां च नियुङ्क्ष्व । अस्माकमिन्द्र! स्तोत्रं च सह वर्धय वासयितः! ॥ ४ ॥

**उक्थमिन्द्रा॑य॒शंस्यं॒वर्ध॑नंपुरुनि॒ष्षिधे॑ ।**
**श॒क्रोयथा॑सु॒तेषु॑णोरा॒रण॑त्स॒ख्येषु॑च ॥ ५ ॥**

**उ॒क्थम् । इन्द्रा॑य । शंस्य॑म् । वर्ध॑नम् । पु॒रु॒निः॒ऽसिधे॑ । श॒क्रः । यथा॑ । सु॒तेषु॑ । नः॒ । र॒रण॑त् । स॒ख्येषु॑ । च॒ ॥ ५ ॥**

### स्कन्दस्वामीयम् ।

उक्थमिन्द्रस्यार्थाय शंसनीयम् । कीदृशं, वर्धनीयम् । कस्य, सामर्थ्यादिन्द्रस्य । स्तूयमाना हि देवता वर्धते वीर्येण । कीदृशायेन्द्राय, पुरुनिष्षिधे । निरित्येष नीत्येतस्य स्थाने । बहूनां शत्रूणां निषिधे निवारकाय । निष्कृत्य वा साधयित्रे स्ववशीकर्त्रे । कथं च पुनः शंसनीयः शक्रः शक्त इन्द्रः यथा सुतेषु नः अस्माकं रारणत् । रमेरिदं छान्दसं

---

१. 'ह्यापश्लोक आरवोऽस्मा' ख. ग पाठः.

णत्वम् । रणिर्वा रमेरर्थे । अत्यन्तं रमते । सख्येषु च सखित्वेषु चास्माभिः सहावैगुण्यमनेन प्रकारेणोच्यते । आवैगुणशंसिनो हि सुतेषु सख्येषु च देवता रमते ॥ ५ ॥

वेङ्कटमाधवीयम् ।

उक्थमिन्द्राय । उक्थमिन्द्राय शंसनीयं बलस्य वर्धनमनेकेषां शत्रूणां निषद्धे[1] यथा शक्रः शक्तः सोऽस्माकं यज्ञेषु सख्येषु चात्यन्तं रमेत ॥ ५ ॥

तमित्सखित्वईमहेतंरायेतंसुवीर्ये ।

सशक्रउतनःशकदिन्द्रोवसुदयमानः ॥ ६ ॥

तम् । इत् । सखिऽत्वे । ईमहे । तम् । राये । तम् । सुऽवीर्ये । सः । शक्रः । उत । नः । शकत् । इन्द्रः । वसु । दयमानः ॥ ६ ॥

स्कन्दस्वामीयम् ।

य उक्तगुण इन्द्रः तम् । इदिति पदपूरणः । सखित्वे । द्वितीयार्थे सप्तमी । ईमहे । याच्ञाकर्मायम् । याचामहे । (सखा) अस्माकं भवेत्येतत् प्रार्थयामह इत्यर्थः । तमेव राये । इयमपि चतुर्थी द्वितीयार्थे । धनम् । सुवीर्ये इत्ययमपि द्वितीयार्थे । शोभनं वीर्यम् । स शक्रः । उ(प ? त)शब्दोऽप्यर्थे । सशब्दाच्च परो द्रष्टव्यः । सोऽपि शक्रः शक्तः नः अस्मभ्यं शकत् । शिक्षति (तुञ्जतीति ?) धनं शकिर्दानकर्मा पठितः । अयं तु शुद्धोऽपि सामर्थ्याद् दानकर्मा । ददात्वित्यर्थः । अ(थ)वा शकिः स्वार्थ एव । उतशब्दस्तु यस्मादर्थे । शकेश्च कर्मभूतेन धात्वन्तरेण नित्यसम्बन्धाद् यो(ग ? ग्य)स्य तस्याध्याहारः । स शक्रो यस्मादस्मभ्यं शक्नोति दातुं तस्माद् याचामह इति । यस्माद् दानसमर्थ इत्यर्थः । (का ? कः) सः । उच्यते । इन्द्रः । कदा कदा ददातु शक्नोति वा दा(तु ? तुम्) । उच्यते । वसु दयमानः । दयति (द्वि ? वि)भागकर्मा । 'लक्षणहेत्वोः क्रियायाः' इति । एवं चायं लक्षणे शान(ल ? च्) । स्तोतृभ्यो धनं विभजन् । यदा स्तोतृभ्यो धनविभा(गेन ? गः) तदा तस्मादस्मभ्यमेतद् ददाति इत्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

तमित् सखित्वे । तमेव सखित्वेऽपेक्षिते सखा भवेति याचामहे । तमेव धनार्थं तमेव शोभनबलार्थम् । स शक्त इन्द्रो धनं प्रयच्छन्नस्माञ्छक्तान् करोतु ॥ ६ ॥

इति प्रथमस्य प्रथमे एकोनविंशो वर्गः ॥

---

१. 'निष्षिधे य' ग., 'निषेधेय' ख. पाठः. २. 'क' ख.पाठः.

सुविवृतंसुनिरजमिन्द्रत्वादातमिद्यशः ।

गवामपव्रजंवृधिकृणुष्वराधोअद्रिवः ॥ ७ ॥

सुऽविवृतम् । सुनिःऽअजम् । इन्द्र । त्वाऽदातम् । इत् । यशः । गवाम् । अप । व्रजम् । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥ ७ ॥

स्कन्दस्वामीयम् ।

सुविवृतं सुष्ठु लोके प्रकाशम् । सुनिरजम् । निरित्येष नीत्येतस्य स्थाने अजगतिक्षेपणयोः । सुनिक्षेपम् । यत्र यत्र विनियोक्तुमिष्यते, तत्र तत्र प्रभूतत्वात् सुविनियोजमित्यर्थः । हे इन्द्र! त्वादातं त्वया दत्तम् । कस्मै सामर्थ्यादस्मभ्यम् । इद् यशः । इच्छब्दः पदपूरणः । यशः अन्नम् । इदानीं तु गवाम् अप व्रजं वृधि । व्रजं गोष्ठमुच्यते । गवामात्मीयं गोष्ठम् अ(पा ? प)-वृधि अपावृणु उत्पादय । आत्मीयाद् गोष्ठाद् गा आनीयास्मभ्यं देहीत्यर्थः । अथवा आपोऽत्र गाव उच्यन्ते । व्रजशब्दोऽपि मेघनाम । वृष्टिलक्षणानामपां सम्बन्धि(नां ? नं) मेघमुद्घाटय वर्षयेत्यर्थः । कृणुष्व राधः धनं च कुरु, धनं च देहीत्यर्थः । हे अद्रिवः! । अद्रिरिति पर्वतनाम अथापि तद्धितेन कृत्स्नवन्निगमा भवन्तीत्येतेन न्यायेन पर्वतवि(का ? दा)रो वज्रोऽप्यद्रिरुच्यते । आदरणाद्वा मेघानामसुराणां च । वज्रिन् ! ॥ ७ ॥

वेङ्कटमाधवीयम् ।

सुविवृतम् । सुष्ठ्वपावृतं दिगन्तेषु महत्त्वया सुष्ठु च निर्गच्छदिन्द्र! त्वया दत्तमेवान्नं स त्वं[१] दानाय गोव्रजद्वारमपवृधि । कुरु धनमस्मभ्यमद्रिवः अद्रिरादरणादमित्रानिति वज्रः तद्वन्[३] ! ॥ ७ ॥

नहित्वारोदसीउभेऋघायमाणमिन्वतः ।

जेषःस्वर्वतीरपःसंगाअस्मभ्यंधूनुहि ॥ ८ ॥

नहि । त्वा । रोदसी इति । उभे इति । ऋघायमाणम् । इन्वतः । जेषः । स्वःऽवतीः । अपः । सम् । गाः । अस्मभ्यम् । धूनुहि ॥ ८ ॥

१. 'त्वमादा' ख. पाठः. २. 'वः नाह' क.. 'वः ह' ग. पाठः. ३. 'ज्रः ॥' ख. ग. पाठः.

स्कन्दस्वामीयम् ।

नहीति (निपातेर ? निपातो) नेत्यनेन समानार्थः । न त्वां रोदसी द्यावापृथिवी उभे अपि । ऋघायमाणम् । 'ऋघायते अभियुक्तो भयं त' इत्यादिप्रयोगदर्शनाद् ऋघाय(न्ति ? ति)र्वधार्थः । घ्नन्तं शत्रून् । इन्वतः । व्या(प्त ? प्ति)-कर्मायम् । व्याप्नुतः । शत्रून् घ्नन् द्यावापृथिव्योः सकाशाच्छरीरेण वीर्येण वा त्वं महत्तरो भवसीत्यर्थः । किञ्च जेषः जयसि त्वम् । (अपः) कीदृशः । स्वर्वतीः स्वरादित्यः स्वरश्मिभिराद्याश्यासामन्ति(काः ? कानयनात्) स्वर्वत्यः । अथवा स्वरशब्दः सर्वपर्यायः । सर्वं साध्यं यासामस्ति, ताः स्वर्वत्यः । ताः स्वर्वतीः आदित्यरश्म्याहृताः सर्वस्य वा साधि(ता ? का) इत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

नहि त्वा । नहि त्वा द्यावापृथिव्यावुभे[1] अपि[2] घ्नन्तं नैवं[3] महत्तया व्याप्नुतः । तथा सति स त्वं जय । दिवि स्थिता अपो जित्वा अस्मभ्यं ता अपः मन्धूजुहि ॥ ८ ॥

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः ।
इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ॥ ९ ॥

आश्रुत्ऽकर्ण । श्रुधि । हवम् । नु । चित् । दधिष्व । मे । गिरः । इन्द्र । स्तोमम् । इमम् । मम । कृष्व । युजः । चित् । अन्तरम् ॥ ९ ॥

स्कन्दस्वामीयम् ।

हे आश्रुत्कर्ण ! श्रुधी हवम् आह्वानं श्रुत्वा च नूचिद्दधिष्व । नु इति क्षिप्रनाम । चिच्छब्दः पदपूरणः । क्षिप्रं धारय मनसि स्थापय शृण्वित्यर्थः । श्रवणार्थ एव वा सामर्थ्याद् दधातिः । किम् । गिरः स्तुतीः लौकिकीर्याज्यानुवाक्यालक्षणा वा । नच गिर एव केवलाः । किन्तर्हि । हे इन्द्र ! स्तोमम् इमं ममैव स्वभूतं शस्त्रलक्षणम् । श्रुत्वा च कृष्व कुरुष्व । युजश्चित् सख्युः अन्तिकतमम् । कः पुनरिन्द्रस्य सहायः ........ सन्निहितत्वात् मन्युश्च सहायतया अवश्यम्भावित्वाद् विष्णुर्वा । तस्यापि 'सखे विष्णो वितर'मि'ति इन्द्रस्य सखित्वदर्शनाद् मरुद्गणो वा ॥ ९ ॥

---

१. 'भे नित्र' क. पाठः. २. 'पि मे' ग. पाठः. ३. 'घ्नमरा' ग. पाठः. ४. 'यः ... ... वा स' क. पाठः.

वेङ्कटमाधवीयम् ।

आश्रुत्कर्ण । आभिमुख्येन निवेदितस्य श्रवणशक्तकर्ण ! शृणु ज्ञानं क्षिप्रमेव हृदये धारय मदीया गिरः इन्द्र ! स्तोमं चेमं मदीयं सख्यादपि तव सन्निकृष्टं कुरु ॥ ९ ॥

विद्माहित्वावृषन्तमंवाजेषुहवनश्रुतम् ।
वृषन्तमस्यहूमहऊतिंसहस्रसातमाम् ॥ १० ॥

विद्म । हि । त्वा । वृषन्ऽतमम् । वाजेषु । हवनऽश्रुतम् । वृषन्ऽतमस्य । हूमहे । ऊतिम् । सहस्रऽसातमाम् ॥ १० ॥

स्कन्दस्वामीयम् ।

हिशब्दो यस्मादर्थे । यस्माद् विद्म जानीमः त्वा वृषन्तमम् अतिशयेन वर्षितारम् । वाजेषु सङ्ग्रामेषु हवनश्रुतम् आह्वानानामाह्वानस्य श्रोतारम् । प्रार्थना लक्ष्यते । यस्माच्छब्दश्रुतेस्तस्माच्छब्दोऽध्याहर्तव्यः । तस्माद् वृषन्तमस्य अतिशयेन वर्षितुः तव स्वभूता हूमहे । आह्वानस्याहूयमानप्रार्थनाविनाभावित्वादाह्वानेनात्र प्रार्थना लक्ष्यते । प्रार्थनार्थ एव वा सामर्थ्याद् ह्वयतिः । प्रार्थयामहे । ऊतिं पालनं सहस्रसातमां स्तोत्रसह सहस्राणामतिशयेन स (भक्ति ? हेति) यथा बहूनि स्तोत्रसहस्राणि पठितानीत्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

विद्माहि । जानीमहि त्वामतिशयेन वर्षितारं सङ्ग्रामेषु च योद्धृणामाह्वानस्य श्रोतारम् । अतस्तव अतिशयेन सहस्राणां दातिमूतिं ह्वयामहेऽस्माकमियमस्त्विति ॥१०॥

आतूनइन्द्रकौशिकमन्दसानःसुतंपिब ।
नव्यमायुःप्रसूतिरकृधीसहस्रसामृषिम् ॥ ११ ॥

आ । तु । नः । इन्द्र । कौशिक । मन्दसानः । सुतम् । पिब । नव्यम् । आयुः । प्र । सु । तिर । कृधि । सहस्रऽसाम् । ऋषिम् ॥ ११ ॥

---

१. 'नस्य प्रा' ख. पाठः.

## स्कन्दस्वामीयम् ।

आ इत्युपसर्गः पिबेत्याख्यातेन सम्बन्धयितव्यः । तु इति पदपूरणः क्षिप्रार्थो वा । (प्रपं ? क्षिप्रं) नः अस्माकं स्वभूतम् । हे इन्द्र! कौशिक! कुशिकस्य पुत्र! । अत्र चेतिहासमाचक्षते—(त्विक्षी ? इषी)रथपुत्रः कुशिको नाम राजा पुत्रमिन्द्रतुल्यं कामयमानो ब्रह्मचर्यं चचार । तस्य गाथी नामेन्द्र एव स्वयं पुत्रो जात इति । तदुक्तं — 'पुत्रमिन्द्रसमं कुशिको ब्रह्मचर्यं चचार इच्छन् तस्य त्वैषीरथेर्गाथी पुत्र इन्द्रः स्वयं जज्ञे' इति । अथवा कुशिभिर्बद्ध(स्य दृष्टं दोग्धा ? : स्वयं दृष्टो दुग्धो) वा कौशिकः । तथाहि (चा ? चर)काध्वर्यव इतिहासमधीयते — चत्वारः पृश्नेस्तनया आसंस्त्रिभिर्देवेभ्यो दुह कुशिभिरेकोऽत्रानुबद्ध आसीत् तं वा इन्द्र एवापश्यत् तेनेन्द्राह दुहेत वा अस्य कौशिकत्वमिति । तस्य सम्बोधनम् । हे कौशिक! मन्दसानः । मन्दतिः स्तुत्यर्थो वा मोदनार्थो वा । स्तूयमानो मोद(य ? )मानो वा सुतं सोमं पिब । आपीय च नव्यं स्तुत्यमत्रोत्कृष्टम् आयुः अन्नम् । अथवा नवं नव्यम् । स्वार्थिको यत्प्रत्ययः । आयुरपि जीवितमुच्यते । अ(पि ? चि)र(प्रक्त ? प्रवृ)त्तमिदमस्माकं जीवितम् । प्रसूतिर प्र(सूर्व ? सुपूर्व)स्तिष्ठतिः सर्वत्र वृद्ध्यर्थः । सुष्ठु प्रवर्धय । कृधि कु(रु) च मां सह(स्रां ? स्रसा)...नसहस्राणां संभक्तारम् ऋषिं मधुच्छन्दोनामानम् ॥ ११ ॥

## वेङ्कटमाधवीयम् ।

आतूनइन्द्र । पुत्रमिन्द्रसममिच्छन् कुशिकः ब्रह्मचर्यं चचार । तस्येन्द्रः स्वयमेव पुत्रोऽभूत् । सास्य कौशिकता । स सुवर्ण...कुशिकस्य परिगृहीत आसीत् । सास्य कौशिकतेति वा ब्राह्मणम् । आतिष्ठ...पिबेन्द्र! कौशिकास्माकं सहायभूत सोमं नवतममायुश्च सुष्ठु प्रवर्धय कुरु च सहस्रधनस्य संभक्तारं मधुच्छन्दसमृषिम् ॥ ११ ॥

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वन्तु वि॒श्वतः॑ ।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवन्तु॒ जुष्ट॑यः ॥ १२ ॥

परि॑ । त्वा॒ । गि॒र्व॒णः॒ । गिरः॑ । इ॒माः । भ॒व॒न्तु॒ । वि॒श्वतः॑ ।
वृ॒द्धऽआ॑युम् । अनु॑ । वृद्ध॑यः । जुष्टाः॑ । भ॒व॒न्तु॒ । जुष्ट॑यः ॥ १२ ॥

१. 'कु', २. 'ति ब्रा', ३. 'र' ख. पाठः.

स्कन्दस्वामीयम्।

परीत्युपसर्गो भव(त्या)ख्यातेन सम्बन्धयितव्यः। हे गिर्वणः! स्तुतिभिः सम्भजनीय! स्तु(तीवा? तिभिर्वा) (सः? सं) भ(क्तः? क्त!) गिरः इमाः अस्मदीयाः परिभवन्तु परिपूर्वो भवतिः सर्वत्र परिग्रहे। परिगृह्णन्तु। विश्वतः (वि?)सर्वतः। कीदृशं वृद्धायुम्। एतिर्गत्यर्थः। वृद्धान् शत्रून् मथा(याव्?यभ)तिगन्तारम्। कीदृ(शम्? शः) अनुवृद्धयः। अनु इत्येष पदपूरणः। सुशब्दस्य वार्थे। सुष्ठु वृद्धाः। ताश्च (त?)जुष्टाः प्रिया भवन्तु। जुष्टयः प्रीणयित्र्यः॥ १२॥

वेङ्कटमाधवीयम्।

परित्वा गिर्वणः। 'सुरूपकृत्नुमूतय' इत्याद्या गिरः त्वां गीर्भिर्वननीय! सर्वतः परिभवन्तु परितो भवन्तु। तथा वर्धितं त्वामन्वस्माकं वृद्धयो भवन्तु। पर्याप्ताश्च भवन्त्वस्माकं श्रियः॥ १२॥

इति प्रथमस्य प्रथमे विंशो वर्गः॥

---

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः।
रथीतमं रथीनां वाजानां सत्पतिं पतिम्॥ १॥

इन्द्रम्। विश्वाः। अवीवृधन्। समुद्रऽव्यचसम्। गिरः। रथिऽतमम्। रथिनाम्। वाजानाम्। सत्ऽपतिम्। पतिम्॥ १॥

स्कन्दस्वामीयम्।

तस्य तु जेतानामोत्तमं सूक्तं मधुच्छन्दस उच्यते। अस्य मधुच्छन्दसोवदुत्तमं सूक्तम् इन्द्रं विश्वा अवीवृधन्निति। तद् जेता नाम मधुच्छन्दःपुत्रोऽपश्यत्। इन्द्रं विश्वाः सर्वा अवीवृधन् वर्धितवत्यः। वर्धयन्तु वा। समुद्रव्यचसम्। व्यचो व्याप्तिरुच्यते। 'न तेविव्यत्', 'समीविव्याच' इत्यादौ सर्वत्र व्याप्त्यर्थः। समुद्रस्येव व्याप्तिर्यस्य स समुद्रव्यचाः तं समुद्रव्यचसं सर्वव्या-

१. 'तान्नस्त्वस्मा' ख., 'तान्नत्वा' ग. पाठः. २. 'कं पर्याप्ताः श्रिं' ख. ग. पाठः. ३. 'तुजाना' ख. पाठः.

पिनामित्यर्थः । गिरः स्तुतयः । कीदृशं रथीतमम् । रथं यो नयति, तत्रस्थो वा युध्यते, स रथी । अन्येषां रथिनां सकाशादतिशयेन र(थिनां[१]थिनम्) वाजानामिति षष्ठी पतिमित्येतेन सम्बध्यते । अन्नानां स्वामिनं, सतां च पालयितारम् ॥ १ ॥

वेङ्कटमाधवीयम् ।

इन्द्रं विश्वाः । जेता माधुच्छन्दसः । इन्द्रं विश्वाः स्तोतॄणां गिरोऽवर्धयन् । अन्तरिक्षस्येव यस्य व्याप्तिरतिशयेन । रथिनामश्वानां सतां च पतिम् ॥ १ ॥

सख्येतइन्द्रवाजिनोमाभेमशवसस्पते ।

त्वामभिप्रणोनुमोजेतारमपराजितम् ॥ २ ॥

सख्ये । ते । इन्द्र । वाजिनः । मा । भेम । शवसः । पते ।
त्वाम् । अभि । प्र । नोनुमः । जेतारम् । अपराऽजितम् ॥ २ ॥

स्कन्दस्वामीयम् ।

सख्य इति सप्तमीनिर्देशाद् वर्तमाना इति वाक्यशेषः । सख्ये तव वर्तमाना वयं हे इन्द्र! वाजिनः हविर्लक्षणेनान्नेन स्तुव(तः ? न्तः) त्वा हविषा (य)-जन्त इत्यर्थः । मा भेम त्वत्प्रसादात् कुतश्चिदपि मा भैष्म । हे शवसस्पते! बलस्य स्वामी पालयिता वा । नच मुधैवाभयं प्रार्थयामहे । किंतर्हि । त्वामभिप्रणोनुमः । 'नु स्तुतौ' । पौनःपुन्ये चात्र यङो लुक् । प्रशब्दः प्रकर्षे । प्रकर्षेण पुनः पुनरभिष्टुमः । कीदृशं जेतारं शत्रूणाम् अपराजितं च शत्रुभिः ॥ २ ॥

वेङ्कटमाधवीयम् ।

सख्ये ते । त्वया सख्ये सति बलिनो वयं न कुतश्चिद् बिभेम । बलस्य पते! त्वां च प्रकर्षेणाभिष्टुमो जेतारमपराजितम् ॥ २ ॥

पूर्वीरिन्द्रस्यरातयोनविदस्यन्त्यूतयः ।

यदीवाजस्यगोमतःस्तोतृभ्योमंहतेमघम् ॥ ३ ॥

---

१. 'नां वाजानां सत्पतिं पतिं वा' क. पाठः.

पूर्वीः । इन्द्रस्य । रातयः । न । वि । दस्यन्ति । ऊतयः ।
यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघम् ॥ ३ ॥

## स्कन्दस्वामीयम् ।

पूर्वीरिन्द्रस्य काल प्रवृत्ताश्चिरन्तन्यः । इन्द्रस्य रातयः दानानि न विदस्यन्ति । वीत्ययमुपेत्यस्य स्थाने । दस्यतिः क्षयार्थः । नोपक्षीयन्ते । ऊतयः पालनानि च । यदि । शुद्धोऽप्ययं यदिरपिसहितस्यार्थे द्रष्टव्यः । यद्यपि वाजस्य गोमतः । द्वितीयार्थे षष्ठी । वाजं गोमद् अन्नं गोभिः सहितम् । स्तोतृभ्यो मंहते । दानकर्मायं मंहतिः । ददाति । अन्नं धनं च । एतदुक्तं भवति — यद्यप्यन्येभ्योऽपि स्तोतृभ्योऽन्नं गां धनं चेन्द्रो ददाति । तथापि प्रभूतधनत्वान्नैवास्य पूर्वदानानि पालनानि च क्षीयन्ते । तान्यपि तज्ज्योतिः अत्यन्तप्रभूतधन इत्यर्थः ॥ ३ ॥

## वेङ्कटमाधवीयम् ।

पूर्वीरिन्द्रस्य । बह्वीनीन्द्रस्य दानानि रक्षणानि च न क्षुध्यन्त्युपर्युपरि वर्धन्ते यद्ययमन्नस्य गोयुक्तस्य स्तोतृभ्यः सर्वदा सर्वं प्रयच्छति । तदानीं तेन दत्तानि धनानि तत्कृतानि रक्षणानि च न क्षुध्यन्ति बहुत्वादिति ॥ ३ ॥

पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
इन्द्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥ ४ ॥

पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत ।
इन्द्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥ ४ ॥

## स्कन्दस्वामीयम् ।

पुरां भिन्दुः असुरपुराणां भेत्ता । युवा तरुणः । कविर्मेधावी । अमितौजाः अपरिमितबलः । अजायत जन्मन एव प्रभृतीदृश इत्यर्थः । कः । इन्द्रः । कीदृशः । विश्वस्य कर्मणः धर्ता, सर्वस्य कर्मणो धारयिता यावद्धि किञ्चित्

१. 'ते' ख. पाठः. २. 'न्यस्य', ३. 'परि' क. पाठः.

कर्मास्य (साधारसं ?) वृष्ट्या (य) (कं ? तं) वृष्टिश्चेन्द्रायत्ता । अतो वृष्टिद्वारेण सर्वस्य कर्मणो धारयितेन्द्रः । वज्री वज्रवान् । पुरुष्टुतः बहुभिः स्तुतः ॥ ४ ॥

वेङ्कटमाधवीयम्।

पुरां भिन्दुः । पुरां भेत्ता युवा क्रान्तकर्माऽमितबल आसीदिन्द्रो विश्वस्य कर्मणो धर्ता वज्री बहुभिः[1] स्तुतः ॥ ४ ॥

**त्वंवलस्यगोमतोऽपावरद्रिवोबिलम् ।**

**त्वांदेवाअबिभ्युषस्तुज्यमानासआविषुः ॥ ५ ॥**

**त्वम् । वलस्य । गोऽमतः । अप । अवः । अद्रिऽवः । बिलम् ।**

**त्वाम् । देवाः । अबिभ्युषः । तुज्यमानासः । आविषुः ॥ ५ ॥**

स्कन्दस्वामीयम्।

वल इति मेघनाम । त्वं मेघस्य गोमतः उदकवतः । अपावः अपावृतवान् अपावृणोषि वा । हे इन्द्र! अद्रिवः! वज्रिन्! बिलम् उदकनिर्गमनच्छिद्रम् । किञ्च, त्वां देवा अबिभ्युषः । अत्रैतरेयिण इतिहासमाचक्षते — इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीदनुसोपतिष्ठध्वमुप मां ह्वयध्वमिति । तथेति तं ह(सि ? नि)ष्यन्त आद्रवन्* हन्तेमान् भीषया इति तानभि प्राश्वसीत् । तस्य श्वसथादीषमाणा विश्वेदेवा अद्रवन् मरुतो हैनं नाजहुः । प्रहर भगवो जहि । वीरय(ध्वे ? स्वे) त्येवैनमेतां वाचं वदन्त उपातिष्ठन्त इति । एतदुच्यते — त्वां देवा मरुतः । अबिभ्युषः । प्रथमार्थे द्वितीयैषा । अबिभिवांसः वृत्रश्वासादभीताः । तुज्यमानासः । क्षिप्रनामैतत् । त्वरमाणाः । आविषुः । (विषि ? अवि)रत्र गत्यर्थः । शुद्धोऽपि सोपसर्गार्थो द्रष्टव्यः । अनुगतवन्तः ॥ ५ ॥

वेङ्कटमाधवीयम्।

त्वं वलस्य । त्वं बलासुरस्य गृहीतपशोरपावृतवानसि वज्रिन्! बिलम् । 'इन्द्रो वलस्य बिलमपोर्णोत् स[2] उत्तमः पशुरासीदि'ति ब्राह्मणम् । त्वामग्रे गच्छन्तं देवा अबिभिवांसस्त्वत्सन्निधानात् पणिभिर्हिंस्यमानास्[3]त्वज[4]यार्थमागता इति ॥ ५ ॥

---

१. 'पुरुष्टुतः' क. पाठः. २. 'य', ३. 'स्तज्जया' ख. पाठः. ४. 'स्तान् जित्वार्थे' क. पाठः.

---

* 'सोऽत्वेन्मां वै हनिष्यन्त आद्रवन्ति' इति ब्राह्मणे अधिकं दृश्यते ।

तवाहं शूर रातिभिः प्रत्यायं सिन्धुमावदन् ।
उपातिष्ठन्त गिर्वणो विदुष्टे तस्य कारवः ॥ ६ ॥

तव । अहम् । शूर । रातिऽभिः । प्रति । आयम् । सिन्धुम् । आऽवदन् । उप । अतिष्ठन्त । गिर्वणः । विदुः । ते । तस्य । कारवः ॥ ६ ॥

## स्कन्दस्वामीयम् ।

तवाहं शूर! रातिभिः । हेताविय तृतीया । स्तोतृभ्यो यानि महान्ति दानानि तैर्हेतुभूतैः । तैरुत्साहित इत्यर्थः । अथवा प्रयोजनस्यात्र हेतुत्वेन विवक्षा। तव सोमदानैर्हेतुभूतैस्तुभ्यं सोमं दातुमित्यर्थः। प्रत्यायं प्रत्याग(तं? मं) सिन्धुम् । 'स्यन्दू प्रस्रवण' इत्यस्यैतद्रूपम् । स्यन्दितारम् । सोमयज्ञोत्तरसमाप्तौ यद् गमनं तदपेक्षोऽत्र प्रत्यागमनव्यपदेशः, धात्वर्थानुवादी वा प्रतिशब्दः आग(त? म)मित्यर्थः । आवदन् आभिमुख्येन वदन् । किम् । सामर्थ्यात् स्तुतीः । नच केवलोऽहं[१] किन्तर्हि । अन्येऽप्यृत्विज ऋषयो वा । उपातिष्ठन्त उपस्थितवन्तः त्वां स्तुतिभिः । गिर्वणः स्तुतिभिः सम्भजनीय! स्तुतीनां वा सम्भक्त! किञ्च । विदुष्टे तस्य कारवः । ते तस्येत्युभयत्र द्वितीयार्थे षष्ठी । तच्छब्दश्रुतेश्च योग्यार्थसम्बद्धो यच्छब्दोऽध्याहर्तव्यः । य उक्तगुणः । विदुः जानन्ति त्वां तं कारवः स्तोतृनामैतत् । अन्येऽपि स्तोतारः ॥ ६ ॥

## वेङ्कटमाधवीयम् ।

[२]तवाहम् । तवाहं शूर! रातिभिस्त्वत्तोऽहं शूर! धनानि गृहीत्वा प्रतिगतवानस्मि[३] कुतस्त्वयेमानि धनानि लब्धानीति[४] प्रगृह्यस्तव धनानाम् । स्यन्दनमाभिमुख्येन वदाम्नि-[५]मन्द्रादिमानि लब्धानी[६]दिति मामुपातिष्ठन्ता[७]ध्वगाः । गीर्भिर्वननीय! ([८]ता तत्? ते तस्य) कर्म, प्राज्ञा जानन्ति । तेषामस्माकं वर्धयाज्ञानीति ॥ ६ ॥

---

१. 'यं' ख. पाठः. २. 'तवाहम् । त्वत्तोऽहं शूरातिभिः त्वत्तोऽहं शूर धनानि गृहीतं प्रत्यागतं स्यन्दितारं सोमं प्रति आभिमुख्येनावदन् न केवलमहंमन्येऽप्युपस्थितवन्तः ऋषय गीर्भिर्वननीय य एवम्भूतः तं त्वां विदुः स्तोतारः ।' क. पाठः. ३. 'न् स्म कु' ख. पाठः. ४. 'निबद्धादि', ५. 'मान्द्राभिमा', ६. 'ब्धाधीति', ७. 'ता', ८. 'तवरतद् क' ग. पाठः.

मायाभिरिन्द्रमायिनं त्वं शुष्णमवातिरः ।
विदुष्टेतस्यमेधिरास्तेषांश्रवांस्युत्तिर ॥ ७ ॥

मायाभिः । इन्द्र । मायिनम् । त्वम् । शुष्णम् । अव । अतिरः ।
विदुः । ते । तस्य । मेधिराः । तेषाम् । श्रवांसि । उत् । तिर ॥ ७ ॥

स्कन्दस्वामीयम् ।

मायेति प्रज्ञानाम प्रज्ञाभिः । हे इन्द्र[1] । मायिनम् अतिसन्धानप्रज्ञायन्तम् । शुष्णं शुष्णनामानमसुरम् । अवातिरः । अवतिरतिर्वधकर्मा । हतवान् यश्चेन्द्रः (रसि?)विदुष्टे तस्य जानन्ति त्वाम् । मेधिराः यज्ञवन्तः यज्ञकारिणः । कतमे । सामर्थ्यादस्मदीया ऋत्विजः पुत्रपौत्रादिका वा । एतज्ज्ञात्वा भक्ततया त्वन्माहात्म्यज्ञाना(ना?)मियुक्तानां तेषाम् । श्रवांसि अन्नानि उत्तिर तिरतिर्वृद्ध्यर्थः । ऊर्ध्वं वर्धय उत्तरोत्तरवृद्ध्या वर्धयेत्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

मायाभिरिन्द्र । मायाभिरेवेन्द्र[1]! त्वं मायाविनं शुष्णासुरं[2] व्यनाशयः । तव तत् कर्म प्राज्ञा जानन्ति । तेषामस्माकं वर्धयान्नानि ॥ ७ ॥

इन्द्रमीशानमोजसाभिस्तोमाअनूषत ।
सहस्रंयस्यरातयउतवासन्तिभूयसीः ॥ ८ ॥

इन्द्रम् । ईशानम् । ओजसा । अभि । स्तोमाः । अनूषत । सहस्रम् । यस्य । रातयः । उत । वा । सन्ति । भूयसीः ॥ ८ ॥

स्कन्दस्वामीयम् ।

इन्द्रम् ईशानं सर्वस्य प्रभवन्तम् । केन हेतुना । ओजसा (ज?) बलेन हेतुना । अभिस्तोमा अनूषत अस्मदीयाः स्तोमा अभिष्टुतव(तः?न्तः) यस्य

१. 'भिरिन्द्र!', २. 'ष्मा' ग. पाठः., 'ष्मनामानमसु' क. पाठः.

इन्द्रस्य । किम् । उच्यते । सहस्रं यस्य रातयः स्तोतृभ्यो दानानि । उत वा । उतेत्यप्यर्थे । अपि वा सन्ति भूयसीः सहस्रादपि बहुतराः । यः स्तोतृभ्योऽत्यन्त बहूनि दानानि ददातीत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

इन्द्रमीशानम् । इन्द्रमीश्वरं बलेन सर्वस्यास्मदीयाः स्तोमा अभ्यस्तुवन् । सहस्र-सङ्ख्यायुक्तानि यस्य दानान्यपि[1] विद्यन्ते भूयांसीति ॥ ८ ॥

इति प्रथमस्य प्रथमे एकविंशो वर्गः ॥

इति प्रथमे मण्डले तृतीयोऽनुवाकः ॥

---

अग्निंदूतंवृणीमहेहोतारंविश्ववेदसम् ।
अस्ययज्ञस्यसुक्रतुम् ॥ १ ॥

अग्निम् । दूतम् । वृणीमहे । होतारम् । विश्वऽवेदसम् । अस्य । यज्ञस्य । सुऽक्रतुम् ॥ १ ॥

स्कन्दस्वामीयम् ।

अग्निं मेधातिथिः काण्वः । अग्निं दूतमित्यादि मेधातिथिर्नाम कण्व-पुत्रोऽपश्यत् । अग्निंदूतमित्याग्नेे(य ? यम्) अग्निं दूतमित्येतत् सूक्तमग्निदेव-तम् । सन्देशेन यः प्रेष्यते स दूत उच्यते । अग्निं दूतं देवान् प्रति सन्देशे अनुगन्तारम् । वृणीमहे व(य)मभ्यर्थयामहे । न केवलं दूतमेव । किन्तर्हि । हो-तारं च तेन ह्यधिष्ठितो मानुषो होता हौत्रं कर्तुं शक्नोति नानधिष्ठितः । क्रि-याशब्दो वा होतृशब्दः । होतारं च देवानाम् । कीदृशम् । विश्ववेदसम् । वेद इति धननाम । सर्वधनं सर्वप्रज्ञं वा । कं होतारम् । अस्य प्रकृतस्य यज्ञस्य सुक्रतुं सुप्रज्ञं वा ॥ १ ॥

वेङ्कटमाधवीयम् ।

अग्निं दूतम् । मेधातिथिः काण्वः । अग्निं दूतं वृणीमहे होतारं सर्वधनिनमस्य यज्ञस्य सुप्रज्ञम् ॥ १ ॥

---

१. 'पि वा वि' क. ग. पाठः.

अग्निमग्निंहवीमभिःसदाहवन्तविश्पतिम्।
हव्यवाहंपुरुप्रियम्॥ २॥

अग्निम्ऽअग्निम्। हवीमऽभिः। सदा। हवन्त। विश्पतिम्। हव्यऽवाहम्। पुरुऽप्रियम्॥ २॥

स्कन्दस्वामीयम्।

अग्निमग्निं यावान् कश्चिदग्निः सर्वं हवीमभिः आह्वान(करणैर्मन्त्रैः) सदा सर्वदा हवन्त आह्वयन्ति यष्टा(रं? रः)। विश्पतिं मनुष्याणां स्वामिनं हव्यवाहं हविषां वोढारं पुरुप्रियं बहूनामिष्टम्॥ २॥

वेङ्कटमाधवीयम्।

अग्निमग्निम्। अग्निमेव ह्वानैः सदाह्वयन्ति[1] नरा विशां पतिं हविषां वोढारं बहूनां प्रियम्॥ २॥

अग्नेदेवाँइहावहजज्ञानोवृक्तबर्हिषे।
असिहोतानईड्यः॥ ३॥

अग्ने। देवान्। इह। आ। वह। जज्ञानः। वृक्तऽबर्हिषे। असि। होता। नः। ईड्यः॥ ३॥

स्कन्दस्वामीयम्।

अग्ने देवान् इह यज्ञे आवह आनय जज्ञानः। जनेर्जानातेर्वा रूपमेतत्। जायमानः (जा? ज)न्मान्त(रमे? र ए)वेत्यर्थः। जा(न? नानः) सामर्थ्यादस्मद्भक्तताम्। वृक्तबर्हिषे। तादर्थ्ये एषा चतुर्थी। वृक्तमास्तीर्णं बर्हिर्येन यजमानेन तस्यार्थाय। किं कारणम्। उच्यते। असि होता यस्माद्धोता त्वमसि। नः अस्माकम् ईड्यः॥ ३॥

१. 'माविशन्ति' ख. पाठः.

वेङ्कटमाधवीयम् ।

अग्ने देवान् । अग्ने! देवानिहावह[1] जानन् यजमानायाग्निः अस्माकं होता स्तोतव्यः ॥ ३ ॥

ताँ उशतो वि बोधय यदग्ने यासि दूत्यम् ।
देवैरा सत्सि बर्हिषि ॥ ४ ॥

तान् । उशतः । वि । बोधय । यत् । अग्ने । यासि । दूत्यम् ।
देवैः । आ । सत्सि । बर्हिषि ॥ ४ ॥

स्कन्दस्वामीयम् ।

तान् उशतः यज्ञगमनं कामयमानान् विबोधय अस्य यजमानस्य यज्ञे गन्तव्यमित्येतच्चेक्षया । कांस्तान् । उच्यते । यत् । षष्ठ्या द्वितीयाया वा अत्र लुक् । येषां यान् वा प्रति । हे अग्ने! यासि प्रतिपद्य(ते? से) । (स?) दूत्यं दूतकर्म । देवानित्यर्थः । आगतैर्देवैः सह आसत्सि आसीद उपविश बर्हिषि अस्मिन् ॥ ४ ॥

वेङ्कटमाधवीयम् ।

ताँ उशतः । तान् देवान् कामयमानांस्त्वं[2] विबोधय । यदा त्वमग्ने! गच्छसि दूत्यं त्वमपि तैः सहासीद बर्हिषि ॥ ४ ॥

घृताहवन दीदिवः प्रति ष्म रिषतो दह ।
अग्ने त्वं रक्षस्विनः ॥ ५ ॥

घृतऽआहवन । दीदिऽवः । प्रति । स्म । रिषतः । दह ।
अग्ने । त्वम् । रक्षस्विनः ॥ ५ ॥

१. 'ज्ञायमानः य' ख. पाठः. २. 'तान् वि' क. पाठः.

आहुतिलक्षणं घृतमाहूयते यस्मिन् स घृताहवनः हे घृताहवन! । दीदिवः! दीप्तिमन्! । प्रति ष्म रिषतो दह । ष्मेति पदपूरणः । प्रतिदह । कान् । रिषतः हिंसतो मां हे अग्ने! त्वम् । कीदृशान् । रक्षस्विनः । रक्षःशब्देनात्र रक्षःसम्बन्धि क्रौर्यं लक्ष्यते । तद्वतः रक्षोभवान् अत्यन्तक्रूरानित्यर्थः ॥ ५ ॥

### वेङ्कटमाधवीयम् ।

घृताहवन । घृतं[1] यस्मिन्नाहूयते[2] प्रियतमं स घृताहवनो[3] दीप्यमानः प्रतिदह हिंसकान् राक्षसानग्ने! त्वं बलवतः ॥ ५ ॥

**अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।**
**हव्यवाड्जुह्वास्यः ॥ ६ ॥**

**अग्निना । अग्निः । सम् । इध्यते । कविः । गृहऽपतिः । युवा । हव्यवाट् । जुहुऽआस्यः ॥ ६ ॥**

### स्कन्दस्वामीयम् ।

पादस्त्वत्र द्वि(पे? देव)तः । निर्म(थ्यं? थ्या)हवनीयार्थोऽग्निनाग्निः समिध्यते । अत्र सू(त्रे? क्ते) पाद एको द्वि(दे)(व)तः निर्मथ्यार्थ आहवनीयार्थश्च । कतमः । अग्निनाग्निः समिध्यते इत्ययम् । अग्निना निर्म(थ्ये)न अग्निराहवनीयः समिध्यते दीप्यते कविर्मेधावी गृहपतिर्यजमानस्य यज्ञगृ(ह)स्य वा स्वामी युवा तरुणः । अ(ह्नु? मिरु)पशान्तोऽपीन्धनं प्राप्य पुनस्तरुणीभवति । तेनास्योपपन्नं सदा तरुणत्वम् । हव्यवाट् हविषां वोढा जुह्वास्यः जुहूरास्यस्थानीया यस्य स जुह्वास्यः । यथा हि मनुष्या आस्येनादन्ति, तद्वद् जुह्वा अग्निः ॥ ६ ॥

### वेङ्कटमाधवीयम् ।

अग्निनाग्निः । निर्मथ्याग्निनाहवनीयो[4]ऽग्निः समिध्यते । कविर्गृहपतिर्युवा हविषां वोढा जुहूर्यस्यास्यस्थानीया[5] ॥ ६ ॥

**इति प्रथमस्य प्रथमे द्वाविंशो वर्गः ॥**

---

१. 'तमाहू', २. 'ते यस्मिन प्रि', ३. 'न' क. पाठः. ४. 'थ्यनाग्नि' क. ग. पाठः. ५. 'निका ॥' क. पाठः.

कविमग्निमुपस्तुहिसत्यधर्माणमध्वरे।
देवममीवचातनम् ॥ ७ ॥

कविम्। अग्निम्। उप। स्तुहि। सत्यऽधर्माणम्। अध्वरे। देवम्। अमीवऽचातनम् ॥ ७ ॥

स्कन्दस्वामीयम्।

कविमग्निमुपस्तुहि। आत्मन एवायमन्तरात्मनः प्रैषः। सत्यधर्माणम्। अध्वरे यज्ञे। देवम्। अमीवचातनम्। अमी(वाहं? वो हिं)सिता तस्य चा-(यन्नि? तनं नि)र्नाश(न? नम्)। स्तो(त्रं? तृ)हिंसितॄणां नाशयितारमित्यर्थः॥७॥

वेङ्कटमाधवीयम्।

कविमग्निम्। कविमग्निमुपस्तुहि सत्यधर्माणं यज्ञे द्युस्थानं रक्षसां चातयितारम् ॥ ७ ॥

यस्त्वामग्नेहविष्पतिर्दूतंदेवसपर्यति।
तस्यस्मप्राविताभव ॥ ८ ॥

यः। त्वाम्। अग्ने। हविःऽपतिः। दूतम्। देव। सपर्यति। तस्य। स्म। प्रऽअविता। भव ॥ ८ ॥

स्कन्दस्वामीयम्।

यस्त्वाम्। हे अग्ने!। हविष्पतिः हविषः स्वामी अस्मदादिर्यजमानः। दूतम्। हे देव!। सपर्यति परिचरति। तस्य स्म। प्राविता प्रकर्षेण रक्षिता भव ॥ ८ ॥

वेङ्कटमाधवीयम्।

यस्त्वामग्ने। यस्त्वामग्ने! यजमानो दूतं देव! परिचरति तस्य त्वं प्रकर्षेण रक्षको भव। स्मेति[१] पूरणम् ॥ ८ ॥

---

१. 'स्म पू' ख. पाठः.

**योअग्निंदेववीतयेहविष्माँआविवासति।**

**तस्मैपावकमृळय ॥ ९ ॥**

**यः। अग्निम्। देवऽवीतये। हविष्मान्। आऽविवासति। तस्मै। पावक। मृळय ॥ ९ ॥**

### स्कन्दस्वामीयम्।

यो भवन्तमग्निं देववीतये। (तप ? वी)तिर्गत्यर्थः। अशनार्थो वा। देवान् प्रति गमनाय देवानां वो हविर्भक्षणाय। हविष्मान् हविःसंयुक्तो यजमानः। आविवासति परिचर्यायामाभिमुख्येन परिचरति। तस्मै। द्वितीयार्थे चतुर्थ्येषा। तं हे पावक! शोधयितः! मृळय सुखय। (सुखय सर्वं यन्त्वामस्तोष्म ?) ॥ ९ ॥

### वेङ्कटमाधवीयम्।

यो अग्निम्। योऽग्निं यज्ञार्थं हविष्मान् परिचरति तस्मै पावक! सुखमुत्पादय ॥ ९ ॥

**सनःपावकदीदिवोग्नेदेवाँइहावह।**

**उपयज्ञंहविश्चनः ॥ १० ॥**

**सः। नः। पावक। दीदिऽवः। अग्ने। देवान्। इह। आ। वह। उप। यज्ञम्। हविः। च। नः ॥ १० ॥**

### स्कन्दस्वामीयम्।

स नः। तादर्थ्ये एषा चतुर्थी। अस्माकमर्थे। हे पावक!। दीदिवः! दीप्तिमन्! अग्ने! देवान् इहावह। केह। उच्यते। उप यज्ञं हविश्च यज्ञस्य हविषश्च (नः स ?) समीपे नः अस्माकं स्व(भुव ? भूत)स्य ॥ १० ॥

### वेङ्कटमाधवीयम्।

स नः पावक। सोऽस्माकं पावक! दीप्त! अग्ने! देवानिहावह। हविश्चास्माकं श्रुतं यज्ञमुपप्राप्तम् ॥ १० ॥

**सनःस्तवानआभरगायत्रेणनवीयसा।**
**रयिंवीरवतीमिषम् ॥ ११ ॥**

**सः। नः। स्तवानः। आ। भर। गायत्रेण। नवीयसा। रयिम्। वीरऽवतीम्। इषम् ॥ ११ ॥**

### स्कन्दस्वामीयम्।

स नः अस्मदर्थं स्तवानः स्तूयमानः अस्माभिः आभर आहर आनय। केन स्तवा(नं? नः)। गायत्रेण। गायतेरर्चतिकर्मण एतद् रूपम्। स्तवे(न) नवीयसा नवतरेण अन्यैरकृतपूर्वेण। किमाहराणि। उच्यते। रयिं धनं वीरवतीं पुत्रसंयुक्ताम् इषम् अन्नं च ॥ ११ ॥

### वेङ्कटमाधवीयम्।

स नः स्तवानः। सोऽस्मभ्यं स्तूयमानो गायत्रेण साम्ना नवतरेण रयिं वीरयुक्तमन्नं चाहर ॥ ११ ॥

**अग्नेशुक्रेणशोचिषाविश्वाभिर्देवहूतिभिः।**
**इमंस्तोमंजुषस्वनः ॥ १२ ॥**

**अग्ने। शुक्रेण। शोचिषा। विश्वाभिः। देवहूतिऽभिः। इमम्। स्तोमम्। जुषस्व। नः ॥ १२ ॥**

### स्कन्दस्वामीयम्।

अग्ने! शुक्रेण शुक्लवर्णेन शोचिषा। ज्वल(ना? न्ना)मैतत्। ज्वलता। केन। सामर्थ्यादात्मना। विश्वाभिः सर्वाभिश्च देवहूतिभिः देवाह्वा(ने? नैः) इमं स्तोमं जुषस्व सेवस्व नः अस्माकं स्वभूतम्। स्वयं च शृणु। देवांश्च सर्वान् श्रावकानाह्वय इत्यर्थः ॥ १२ ॥

वेङ्कटमाधवीयम् ।

अग्ने शुक्रेण । अग्ने! ज्वलता तेजसा सर्वैश्च देवाह्वानैर्युक्तस्त्वमिमं स्तोमं सेवस्व नः ॥ १२ ॥

इति प्रथमस्य प्रथमे त्रयोविंशो वर्गः ॥

---

सुसमिद्धोनआवहदेवाँअग्नेहविष्मते ।

होतःपावकयक्षि च ॥ १ ॥

सुऽसमिद्धः । नः । आ । वह । देवान् । अग्ने । हविष्मते । होतरिति । पावक । यक्षि । च ॥ १ ॥

स्कन्दस्वामीयम् ।

सुसमिद्धो द्वादशर्चमाप्रीसूक्तम् । सर्वत्र चाप्रीसूक्ते यथाक्रममेकैकस्यामृचि आसां देवतानामेकैका देवता । इध्मः, तनूनपात्, नराशंसः, इळः, बर्हिः, देवीर्द्वारः, उषासानक्ता, दैव्याहोतारा, तिस्रोदेवीः, त्वष्टा, वनस्पतिः, स्वाहाकृतय इति । (द ? इ)ध्यतेऽसावितीध्मः समिन्धनसम्बद्धोऽग्निरुच्यते । सुसमिद्धः सुष्ठु दीप्तः नः अस्माकं स्वभूताय आवह देवान् हे अग्ने! हविष्मते यजमानाय माचवाक्षीरेव केवलं, हे होतः! पावक! यक्षि च यज च ॥ १ ॥

वेङ्कटमाधवीयम् ।

सुसमिद्धो नः । आप्रीणामग्न्यादयो देवताः । समिदादीनां यज्ञाङ्गानामुक्तिमात्रमिति । सुसमिद्धस्त्वमग्ने! अस्माकं[1] यजमानाय देवान्नावह । होतः! शोधयितः! तान् यज च ॥ १ ॥

मधुमन्तंतनूनपाद्यज्ञंदेवेषुनःकवे ।

अद्याकृणुहिवीतये ॥ २ ॥

मधुऽमन्तम् । तनूऽनपात् । यज्ञम् । देवेषु । नः । कवे । अद्य । कृणुहि । वीतये ॥ २ ॥

---

१. 'कमस्मै य' क. ग. पाठः.

## स्कन्दस्वामीयम् ।

मधुमन्तं मधुस्वादैर्मृष्टैर्हविर्भिः तद्वन्तं हे तनूनपात्! आपोऽत्र त(प ? न्व) उच्यन्ते अ(न्त)रिक्षे त(त)त्वात् । तासां नपात् पौत्रः । कोऽसौ । अग्निः । कथम् । अद्भ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्य एष जायत इति । तस्य सम्बोधनम् । हे तनूनपात्! यज्ञं देवेषु । सामीपिकमिदमधिकरणं गङ्गायां गाव इति यथा । देवसमीपे अस्माकं स्वभूतम् । कवे! मेधाविन्! अद्य कृणुहि कुरु । देवसमीपं नयेत्यर्थः । किमर्थम् । वीतये कामाय भक्षणाय वा । (वीतं ?) यज्ञं कथं देवाः कामयेरन् हवींषि (भ ?)वा भक्षयेयुरित्येवमर्थम् ॥२॥

### वेङ्कटमाधवीयम् ।

मधुमन्तम् । आज्यवन्तं तनूनपाद्! यज्ञं हविर्देवेष्वस्माकं कवे! अद्य कृण्व-शनाय ॥ २ ॥

**नराशंसमिह प्रियमस्मिन्यज्ञ उपह्वये ।**

**मधुजिह्वं हविष्कृतम् ॥ ३ ॥**

**नराशंसम् । इह । प्रियम् । अस्मिन् । यज्ञे । उप । ह्वये । मधु-ऽजिह्वम् । हविःऽकृतम् ॥ ३ ॥**

## स्कन्दस्वामीयम् ।

नराशंसं शंसिः स्तुत्यर्थः । नरैः प्रशस्यत इति नराशंसोऽग्निः तं नराशं-सम् । इह मनुष्यलोके प्रियम् इष्टम् । मनुष्याणां प्रियमित्यर्थः । अस्मिन् यज्ञे उपह्वये । मधुजिह्वम् । मधुस्वादेषु हवि(ष ? ष्षु) जिह्वा यस्य स मधुजिह्वः नित्यमृष्टानां हविषां भक्षयितेत्यर्थः । अथवा जि(ह्व ? ह्वे)ति वाङ्नाम मध्वी जिह्वा यस्य स मधुजिह्वः । होतृत्वाद्ध्यग्नेर्देवतानां स्तावकत्वादस्ति मधुवाक्त्वम् । सुभ-गवचनमित्यर्थः । हविष्कृतं हविषां कर्तारम् ॥ ३ ॥

### वेङ्कटमाधवीयम् ।

नराशंसम् । नरैः शंसनीयमग्निं प्रियमिहोपह्वयेऽस्मिन् यज्ञ इति विशदवचनं मादयितृजिह्वं हविषां कर्तारम् ॥ ३ ॥

**अग्ने॑सु॒खत॑मे॒रथे॑दे॒वाँई॑ळि॒तआव॑ह ।**
**असि॒होता॒मनु॑र्हितः ॥ ४ ॥**

**अग्ने॑ । सु॒खऽत॑मे । रथे॑ । दे॒वान् । ई॒ळि॒तः । आ । व॒ह॒ । असि॑ । होता॑ । मनुः॑ऽहितः ॥ ४ ॥**

### स्कन्दस्वामीयम् ।

ईडेः स्तुतिकर्मण एतद् रूपम् । (वा ? धा)तूपात्तस्तुतिसम्बन्धोऽग्निः । हे अग्ने! सुखतमे रथे । 'सुखैरथेभिरूतये हविष्मैरश्वैः सुवृता रथेने'ति तुल्यार्थेऽन्यत्र तृतीयानिदर्शनात् तृतीयार्थे सप्तम्येषा । सुखतमे रथे सुखतमेन रथेन देवम् । ईळितः स्तुतः अस्माभिः । आवह । किं कारणम् । असि होता मनुर्हितः मनुना प्रजापतिना निहितः स्थापितः मनु(ष्याय ? ष्यपर्या)यो वा मनुशब्दः मनुष्येषु निहितः उपकारक इत्यर्थः ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

अग्ने सुखतमे । अग्ने! सुखतमे रथे स्थापयित्वा देवांस्तुतस्त्वमावह । [१]असि त्वं होता मनुष्यैः पुरो[२] निहितः ॥ ४ ॥

**स्तृ॒णी॒त ब॒र्हिरा॑नु॒षग्घृ॒तपृ॑ष्ठं मनीषिणः ।**
**यत्रा॒मृत॑स्य॒ चक्ष॑णम् ॥ ५ ॥**

**स्तृ॒णी॒त । ब॒र्हिः । आ॒नु॒षक् । घृ॒तऽपृ॑ष्ठम् । म॒नी॒षि॒णः॒ । यत्र॑ । अ॒मृत॑स्य । चक्ष॑णम् ॥ ५ ॥**

### स्कन्दस्वामीयम् ।

स्तृणीतेति भूते काले व्यत्यये(न ? ना)यं लोट् स्तृतवन्तः स्थ । बर्हिः दर्भान् आनुषग् । आनुषगिति नामानुपूर्वस्य । आनुपूर्व्येण । घृतपृष्ठम् । घृतं पृष्ठे यस्य स घृतपृष्ठः, बर्हिषो ह्युपरि हविर्लक्षणं घृतं साद्यते । अथवा घृतमित्युदकनाम तेन स्पृष्टं घृतपृष्ठं प्रोक्षणीभिः प्रोक्षितमित्यर्थः । हे मनीषिणः

---

१. 'सि हो', २. 'ष्यपु', ३. 'रोहि' क. पाठः.

मेधाविनोऽध्वर्यवः ! यत्र बर्हिषि अमृतस्य अमृतसदृशस्यान्तमृष्टस्य हवि(षा ल ? षः च)क्ष(णम ? णं)दर्शनं सादि(त्य ? त)स्य सतः । य(त्रा ? त्र) सादितं हविर्दृश्यत इत्यर्थः । अग्निर्वा अमरणधर्मत्वादमृतः [3]तस्य यत्र दर्शनम् । सामीपिकं (त्वे ? त्वि)दमधिकरणं समीपेऽग्निर्दृश्यत इत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

स्तृणीत बर्हिः । स्तृणीत बर्हिरनुपक्तमुपरिस्थितघृतं प्राज्ञाः ! यत्रामृतं[2] हविर्दृश्यते बर्हिषि ॥ ५ ॥

**वि॒श्र॑यन्तामृता॒वृधो॒ द्वारो॑ दे॒वीर॑स॒श्चतः॑ ।**

**अ॒द्या नू॒नं च॒ यष्ट॑वे ॥ ६ ॥**

**वि । श्र॒य॒न्ता॒म् । ऋ॒त॒ऽवृधः॑ । द्वारः॑ । दे॒वीः । अ॒स॒श्चतः॑ । अ॒द्य । नू॒नम् । च॒ । यष्ट॑वे ॥ ६ ॥**

स्कन्दस्वामीयम् ।

विश्रयन्तां विवृता भवन्तु ऋतावृधः यज्ञस्य वर्धयित्र्यः । द्वारः यज्ञगृहद्वारो वा ज्वाला वा अग्नेः । ता हि तस्य द्वारभूताः । देवीर्दीप्ता वा असश्चतः । सश्चतिः सङ्गार्थः । असज्यमानाः अद्यानूनं च नूनशब्दोऽत्र समुच्चयार्थचशब्दश्रुतेः अद्य इत्येतेन च स(ह ? माहा)रार्थस्य समुच्चया(र्थे)स्य योग्यत्वात् पुराशब्दार्थे । अद्य च पुरा च इदानीं पूर्वस्मिंश्च काल इत्यर्थः । यष्टवे यष्टुं यागार्थमित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

विश्रयन्ता यज्ञगृहद्वारो विवृता भवन्तु । यज्ञस्य वर्धयित्र्यो[3]ऽसक्ता अद्य च श्वश्च यागाय । नूनमित्यनेकार्थम् ॥ ६ ॥

इति प्रथमस्य प्रथमे चतुर्विंशो वर्गः ॥

---

**नक्तो॒षासा॑ सु॒पेश॑सा॒स्मिन्य॒ज्ञ उप॑ ह्वये ।**

**इ॒दं नो॑ ब॒र्हिरा॒सदे॑ ॥ ७ ॥**

---

१. 'य' ख. पाठः. २. 'तं ह' क. पाठः. ३. 'त्रेऽन्यास' ख. ग. पाठः.

नक्तोषसा । सुऽपेशसा । अस्मिन् । यज्ञे । उप । ह्वये । इदम् । नः । बर्हिः । आऽसदे ॥ ७ ॥

### स्कन्दस्वामीयम् ।

नक्त इति रात्रिनाम उषा अपररात्रिकं ज्योतिः नक्ता चोषाश्च नक्तोषसा। सुपेशसा पेश इति रूपनाम सुरूपे अ(न्य?)स्मिन् यज्ञे उपह्वये । किमर्थम् । इदं नो बर्हिः इदं बर्हिः इति षष्ठ्यर्थे द्वितीया, अस्य अस्माकं स्वभूतस्य च बर्हिषः आसदे आसदनाय । अत्र बर्हिष्युपवेष्टुमित्यर्थः ॥ ७ ॥

### वेङ्कटमाधवीयम् ।

नक्तोषासा । अहोरात्रे सुरूपे[१] अस्मिन् यज्ञे उपह्वये [illegible]मस्माकं बर्हिः स्तीर्णम् ॥ ७ ॥

**तासुजिह्वाउपह्वयेहोतारादैव्याकवी ।**
**यज्ञंनोयक्षतामिमम् ॥ ८ ॥**

ता । सुऽजिह्वौ । उप । ह्वये । होतारा । दैव्या । कवी इति । यज्ञम् । नः । यक्षताम् । इमम् ॥ ८ ॥

### स्कन्दस्वामीयम् ।

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धोऽत्राध्याहर्तव्यः । यौ सर्वमनुष्यैर्नित्यमाह्वये-(त?ते) तौ सुजिह्वौ । जिह्वेति वाङ्नाम । सुवाचौ शोभनजिह्वाख्यावयवौ वा उपह्वये । होतारा दैव्या देवानां स्वभूतौ । कतमौ । इमं चाग्निमसुं च मध्यमम् । कीदृ(शम्?शौ) कवी मेधाविनौ। तौ चाहूतौ सन्तावागत्य यज्ञं नो यक्षताम् । होतृत्वेनावस्थाय यजतामिमम् ॥ ८ ॥

### वेङ्कटमाधवीयम् ।

ता सुजिह्वा । अयं चाग्निरसौ[२] च मध्यमस्तौ शोभनवाचावुपह्वये[३] । दैव्यौ होतारौ कवी यज्ञं नो यजतामिमम्[४] ॥ ८ ॥

---

१. 'स्व' ख. पाठः. २. 'ग्नि' क. ग. पाठः. ३. 'वा', ४. 'जामीमम्' ग. पाठः.

इळासरस्वतीमहीतिस्रोदेवीर्मयोभुवः ।
बर्हिःसीदन्त्वस्रिधः ॥ ९ ॥

इळा । सरस्वती । मही । तिस्रः । देवीः । मयःऽभुवः । बर्हिः । सीदन्तु । अस्रिधः ॥ ९ ॥

स्कन्दस्वामीयम् ।

महीशब्दोऽत्र महत्त्वगुणयोगाद् भारत्यां वर्तते । इळा सरस्वती मही च भारती एतास्तिस्रो देवीर्मयोभुवः । मय इति सुखनाम (भव ? भु)विश्च सामर्थ्यादन्तर्णीतण्यर्थः । सुखस्य भावयित्र्यः । बर्हिः अस्मदीयं सीदन्तु अस्रिधः । सेधतिः क्षयार्थः । क्षयवर्जिताः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

इळा सरस्वती । इळा सरस्वती महती च भारती तिस्रो देव्यः सुखस्य भावयित्र्यः बर्हिः सीदन्त्वक्षयाः ॥ ९ ॥

इहत्वष्टारमग्रियं विश्वरूपमुपह्वये ।
अस्माकमस्तुकेवलः ॥ १० ॥

इह । त्वष्टारम् । अग्रियम् । विश्वऽरूपम् । उप । ह्वये । अस्माकम् । अस्तु । केवलः ॥ १० ॥

स्कन्दस्वामीयम् ।

त्वष्टा नाम देवानां तक्षा, अग्निर्वा । त्वि(ष्टे ? षे)र्देवतायामकारश्चोपधाया अनिट्त्व(न्ते ? ञ्चे)ति । इह यज्ञे त्वष्टारम् अग्रियम् । अग्रशब्दः प्राधान्यवचनः । अस्मिन् भवमग्रियं प्रधानभूतमित्यर्थः । विश्वरूपम् । विश्वमिति बहुनाम । बहुरूपम् । अतिश(य)वन्महाभाग्ययोगादस्ति देवतानां बहुरूपत्वम् । उपह्वये । उपहूतश्च सन् अस्माकमेव केवलमस्तु । कः । सामर्थ्यात् स्तुत्यो यष्टव्यश्च ॥ १० ॥

वेङ्कटमाधवीयम् ।

इह त्वष्टारम् । इह त्वष्टारं मुख्यं येन विश्वानि[1] रूपाणि[2] विक्रियन्ते तमुपह्वये । सोऽस्माकमस्तु केवलः । 'यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति तावच्छो चैतत् प्रजायते' इति ब्राह्मणम् ॥ १० ॥

अवसृजावनस्पतेदेवदेवेभ्योहविः ।

प्रदातुरस्तुचेतनम् ॥ ११ ॥

अव । सृज । वनस्पते । देव । देवेभ्यः । हविः । प्र । दातुः । अस्तु । चेतनम् ॥ ११ ॥

स्कन्दस्वामीयम् ।

वनान्युदकानि वृक्षा वा तेषां पाता वनस्पतिः अग्निः । कथमुदकानां वृक्षाणां वा पाताग्निः । सति सामर्थ्ये तेषामदाहकत्वात् । हविर्नयति नयजन्यवृष्टिद्वारेण वा यूपो वा वनस्पतिविकारत्वात् । अवसृज अवपूर्वः सृजतिर्दाने । हे वनस्पते! देव! देवेभ्यो हविरिदमस्मदीयम् । प्रदातुरस्तु प्रकर्षेणास्तु दातुर्यजमानस्य चेतनं ज्ञानम् ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अवसृज । अवसृज वनस्पते[3]! यच्छ देव ! देवेभ्यो हविः प्रकर्षेणास्तु[4] । दातुर्यजमानस्य प्रज्ञापनं[5] देवेषु त्वया निवेदितम् ॥ ११ ॥

स्वाहायज्ञंकृणोतनेन्द्राययज्वनोगृहे ।

तत्रदेवाँउपह्वये ॥ १२ ॥

स्वाहा । यज्ञम् । कृणोतन । इन्द्राय । यज्वनः । गृहे । तत्र । देवान् । उप । ह्वये ॥ १२ ॥

स्कन्दस्वामीयम् ।

स्वाहाकारसम्बन्धादुत्तमप्रयाजदेवताः स्वाहाकृतय उच्यन्ते । याश्च यत्र यक्ष्यन्ते तास्तत्रोक्तप्रयाजस्य देवताः । स्वाहाशब्दो होमप्रदाने वर्तते, सुहुतशब्दपर्यायो वा । यज्ञमिति सप्तम्यर्थे द्वितीया । यक्ष्यमाणाभ्यो देवताभ्यो हविःप्रदानं सुहुतं वा हविरुत्तमप्रयाजाख्ये यज्ञे कृणोतन (न?) कुरु-

---

१. 'श्वरू' क. पाठः. २. 'णि कि', ३. 'ते । प्रय' क. ग. पाठः. ४. 'ण दा', ५. 'जवनं' ख. पाठः.

ताध्वर्यवः । क । इन्द्राय यज्वनो गृहे यक्ष्यमाणदेवतानां संस्कारार्थं त्वदुक्तमस्य प्रयाजस्यानैन्द्रे च पशाविन्द्रस्य यक्ष्यमाणत्वात् (?) इन्द्रायेत्ये(ष) तादर्थ्यचतुर्थ्यन्तपरो यज्वनो गृह इत्येतेन सम्बध्यते न (पू)र्वेण । इन्द्रार्थं (यु?य)ष्टुः स्वभूते यज्ञगृहे । तत्र अहमपि यष्टव्यान् देवान् उपह्वये ॥ १२ ॥

वेङ्कटमाधवीयम् ।

स्वाहा यज्ञम् । स्वाहा कृणुत हविरिन्द्राय यजमानस्य गृहे तत्राहं देवानुपह्वये इन्द्रपुरोगमानिति ॥ १२ ॥

इति प्रथमस्य प्रथमे पञ्चविंशो वर्गः ॥

ऐभिरग्नेदुवोगिरोविश्वेभिःसोमपीतये ।
देवेभिर्याहियक्षिच ॥ १ ॥

आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये । देवेभिः । याहि । यक्षि । च ॥ १ ॥

स्कन्दस्वामीयम् ।

ऐभिरग्ने बहुदेवतम् । ऐभिरित्यतद् बहुदेवतं सूक्तम् । आ इत्युपसर्गो याहीत्याख्यातेन सम्बन्धयितव्यः । एभिर्विश्वेभिर्देवेभिरिति सहयोगलक्षणा तृतीया । तानि समानाधिकरणानि । एतैः सर्वैर्देवैः सह अग्ने! दुवो गिरः परिचर्यां स्तुतीश्च प्रति सोमपीतये सोमपानार्थञ्च आयाहि यक्षि च यज चागतान् देवान् ॥ १ ॥

वेङ्कटमाधवीयम् ।

ऐभिरग्ने । आयाह्येभिः सर्वैर्देवैरस्माकं परिचर्यां स्तुतीश्च सोमपानाय यज च तान् देवान् ॥ १ ॥

१. 'स्यादिन्द्रो ये' ख. पाठः २. 'स्स्तोमैर' क. पाठः. ३. 'य ज' ख. पाठः.

आत्वाकण्वाअहूषतगृणन्तिविप्रतेधियः ।

देवेभिरग्नआगहि ॥ २ ॥

आ । त्वा । कण्वाः । अहूषत । गृणन्ति । विप्र । ते । धियः ।
देवेभिः । अग्ने । आ । गहि ॥ २ ॥

स्कन्दस्वामीयम् ।

आ त्वा कण्वा अहूषत आह्वयन्ति त्वां कण्वाः । कण्व इति मेधाविनाम । मेधाविनः ऋत्विजः । अथवा कण्वा इति मेधातिथिरात्मानं प्रति सम्बन्धेनाह । एकस्मिन्नेव चात्मनीदं बहुवचनं पुत्रपौत्रापेक्षया वा । मत्प्रभृतयः कण्वपुत्रा इत्यर्थः । गृणन्ति च । हे विप्र ! मेधाविन् ! ते तव धियः कर्माणि प्रतिज्ञा वा । एतज्ज्ञात्वा देवेभिर्देवैः सह अग्ने ! आगहि आगच्छ ॥ २ ॥

वेङ्कटमाधवीयम् ।

आ त्वा कण्वाः । आहूतवन्तस्त्वां कण्वाः उच्चारयन्ति[1] च मेधाविन्[2] ! तव कर्माणि देवैरग्न[3] आगच्छ ॥ २ ॥

इन्द्रवायूबृहस्पतिंमित्राग्निंपूषणंभगम् ।

आदित्यान्मारुतंगणम् ॥ ३ ॥

इन्द्रवायू इति । बृहस्पतिम् । मित्रा । अग्निम् । पूषणम् ।
भगम् । आदित्यान् । मारुतम् । गणम् ॥ ३ ॥

स्कन्दस्वामीयम् ।

द्वितीयानिर्देशादत्र सोमपानार्थमाह्वयामि स्तौमि चेति वाक्यशेषः । इन्द्रवायू सोमपानार्थायाह्वयामि स्तौमि वा । बृहस्पतिं(भिः ?) मित्रा ए(वे ? क)वचनस्याय(म ? मा)का(रे ? रः) द्विवचननिर्देशाद्वा । अन्यतरवचनेनापि मित्रशब्देन साहचर्यात् । इदं मित्रावरुणयोर्द्वयोरप्यभिधानम् । मित्रावरुणौ अग्निं पूषणं भगम् आदित्यान्मारुतं च गणम् । अथवा तृतीयार्थेऽत्र द्वितीया । पूर्वयर्चैकवाक्यता । देवेभिरग्न आगहि इन्द्रवाय्वाद्यैरिति ॥ ३ ॥

१. 'न्ति मे', २. 'नस्तव' ग. पाठः ३. 'राग' ख. पाठः

वेङ्कटमाधवीयम् ।

इन्द्रवायू । एतान् देवानग्ने! आवह अपिवा कण्वा एतानप्याह्वयतेति । मित्रेति मित्रावरुणयोर्ग्रहणमपि वा मित्रस्यैवेति ॥ ३ ॥

प्र वो॑ भ्रियन्त॒ इन्द॑वो मत्स॒रा मा॑दयि॒ष्णवः॑ ।

द्र॒प्सा मध्वः॑ चमू॒षदः॑ ॥ ४ ॥

प्र । वः॒ । भ्रि॒य॒न्ते॒ । इन्द॑वः । म॒त्स॒राः । मा॒द॒यि॒ष्णवः॑ । द्र॒प्साः । मध्वः॑ । च॒मू॒ऽसदः॑ ॥ ४ ॥

स्कन्दस्वामीयम् ।

व इति तादर्थ्ये चतुर्थी । प्रकृतानां चेन्द्रवाय्वादीनां प्रतिनिर्देशः । युष्माकमर्थाय प्रभ्रियन्ते । भ्रेत्येष समित्येतस्य (स्व? स्था)ने । संभ्रियन्ते । उपकल्प्यन्त इत्यर्थः । अथवा प्रशब्दः स्वा(र्था एवं? र्थ एव ।) भ्रियन्त इति हरतेर्भत्वं 'हृग्रहेरछन्दसि हस्ये'ति । प्रभ्रियन्ते आहवनीयं प्रति प्राप्यन्त इत्यर्थः । के । इन्दवः । कीदृशाः । मत्सराः । मन्दतेस्तृ(णाति? प्ति)कर्मण एतद्रूपम् । तृप्तिकराः । मादयिष्णवः । मदी हर्ष(ग्ल? ग्ले)पनयोः । हर्षयितारः । द्रप्साः । रसोऽत्र द्रप्सा उच्यते । रसरूपाः । अन्तर्णीतमत्वर्थो वा सामर्थ्याद् द्रप्सशब्दः । (र)सवन्त इत्यर्थः । अथवा यन्नवं नातिकठिनं तद् द्रप्स उच्यते । नात्यच्छाः बहला इत्यर्थः । मध्वः मधुस्वादा मृष्टाः । चमूषदः चर्म चमूरुच्यते तत्सादिनः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

प्र वः । हविर्धाना[1] युष्मभ्यं[2] प्रभ्रियन्त इन्द्रादिभ्यः इन्दवः । 'इन्दुरिन्धतेर्दीप्तिकर्मण' इत्युक्तम् । मत्सराः सोमा भवन्ति मन्दतेस्तृप्तिकर्मणस्तेषां विशेषणं मादयिष्णव[3] इति द्रप्सा मधुनश्चमसस्सादिन इत्यौपमिकमिति ॥ ४ ॥

ई॒ळते॒ त्वाम॑व॒स्यवः॒ कण्वा॑सो वृ॒क्तब॑र्हिषः ।

ह॒विष्म॑न्तो अरं॒कृतः॑ ॥ ५ ॥

ईळ॑ते । त्वाम् । अ॒व॒स्यवः॑ । कण्वा॑सः । वृ॒क्तऽब॑र्हिषः । ह॒विष्म॑न्तः । अ॒र॒म्ऽकृतः॑ ॥ ५ ॥

---

१. 'नायुष्म' ख. पाठः. २. 'भ्यं भ्रि' क. पाठः. ३. 'यि' ख. पाठः.

स्कन्दस्वामीयम् ।

ईळते स्तुवन्ति त्वाम् अग्निम् अवस्यवः अवनमात्मनः, तर्पणं वा सोमेन अग्नेस्तत्कामाः कण्वासः मेधाविनः ऋत्विजः कण्वपुत्रा वा मत्प्रभृतयो वृक्तबर्हिषः स्तीर्णबर्हिषः हविष्मन्तः उपकल्पितहविष्काः अरंकृतः पर्याप्तकारिणः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

ईळते । स्तुवन्ति त्वामग्ने ! पालनमिच्छन्तः कण्वाः स्तीर्णबर्हिषो हविष्मन्तः पर्याप्तकारिणः ॥ ५ ॥

घृतपृष्ठामनोयुजोयेत्वावहन्तिवह्नयः ।

आदेवान्त्सोमपीतये ॥ ६ ॥

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहन्ति । वह्नयः । आ । देवान् । सोमऽपीतये ॥ ६ ॥

स्कन्दस्वामीयम् ।

घृतपृष्ठाः । घृ क्षरणदीप्त्योः । घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः । बलवतो ह्यश्वस्य दीप्तिमत् पृष्ठं भवति । मनोयुजः मनसा ध्यातमात्रा ये स्वयमेव युज्यन्ते ते मनोयुजः ये त्वा वहन्ति वह्नयः अश्वाः । वह्निरित्यश्वनाम । आ देवान् । यच्छब्दश्रुतेस्तच्छब्दोऽत्राध्याहर्तव्यः । आदेवानिति (चे ? चोप)सर्गात् कर्मश्रुतेश्च क्रियायोग्यं क्रियापदमध्याहर्तव्यम् । तैरावह देवान् सोमपीतये ॥ ६ ॥

वेङ्कटमाधवीयम् ।

घृतपृष्ठाः । अग्नेः[1] पानायाश्वपृष्ठे घृतमास्ते । मनसा युज्यमाना ये त्वां वहन्त्यश्वास्तैरावह देवान् सोमपानाय ॥ ६ ॥

इति प्रथमस्य प्रथमे षड्विंशो वर्गः ॥

---

तान्यजत्राँऋतावृधोग्नेपत्नीवतस्कृधि ।

मध्वःसुजिह्वपायय ॥ ७ ॥

---

१. 'ग्ने' क. ग. पाठः

तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि । मध्वः । सुऽजिह्व । पायय ॥ ७ ॥

स्कन्दस्वामीयम् ।

तच्छब्दश्रुतेर्योग्यार्थसम्बन्धी यच्छब्दोऽध्याहर्तव्यः । (यान् देवाना-वाहितो? ये देवा आवाहिता अ)स्माभिस्तान् । यजत्रान् यष्टव्यान् ऋतावृधः यज्ञस्योदकस्य सत्यस्य वा वर्धयितॄन् हविषा हि स्तुत्या च देवता वर्धन्ते । हे अग्ने! पत्नीवतस्कृधीति पत्नीसंयुक्तान् कुरु । पत्नीरप्येषामावहेत्यर्थः । ओह्य च । (मध्वः) षष्ठीनिर्देशादेक(शेष? देश)मिति शेषः । द्वितीयार्थे वा षष्ठी । मधुस्वा(दथ्येवं? दो मधु त)स्यैकदेशं स्वांश(लक्षण?)लक्षणं (मधुस्वाद?) मधुस्वादं वा सोमं हे सुजिह्व! सुवाक्! शोभनजिह्वाख्यावयवो वा (वय? पायय) ॥ ७ ॥

वेङ्कटमाधवीयम् ।

तान्यजत्राँ। तान् यष्टव्यान् यज्ञस्य वर्धयितॄन् अग्ने! पत्नीवतश्च कुरु । कृत्वा च सोमं सुज्वाल[1]! पायय ॥ ७ ॥

येयजत्राय‌ईड्यास्तेतेपिबन्तुजिह्वया ।
मधोरग्नेवषट्कृति ॥ ८ ॥

ये । यजत्राः । ये । ईड्याः । ते । ते । पिबन्तु । जिह्वया । मधोः । अग्ने । वषट्ऽकृति ॥ ८ ॥

स्कन्दस्वामीयम् ।

(द्वे?) ये यष्टव्या ये च ईड्याः स्तुत्या देवास्ते (ते) तव स्वभूतया जिह्वया पिबन्तु । अग्निमुखा हि देवाः । तेऽग्नेरेव जिह्वया पिबन्ति, न स्वया । वाङ्नाम वा जिह्वाशब्दः, हेतौ च तृतीया । तव वाचा हेतुना त्वयोच्यमाना इत्यर्थः । किं पिबन्तु । उच्यते । (मेधा? मधोः) सोमस्यैकदे(श? शं), स्वांशलक्षणं मधु वा, सोमं वा हे अग्ने! वषट्कृति वषट्कारकाले ॥ ८ ॥

१. 'ह्वा पा' ग. पाठः.

वेङ्कटमाधवीयम् ।

ये यजत्राः । ये यष्टव्या[1] ये येज्याः[2] 'मनुष्या वा ऊन्याः पितरो नमस्या देवा यज्ञिया' इति ब्राह्मणम् । ते तव जिह्वया सोमस्य वषट्कृतं हुतं पिबन्तु ॥ ८ ॥

**आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः ।**
**विप्रो होतेह वक्षति ॥ ९ ॥**

**आ । ईम् । सूर्यस्य । रोचनात् । विश्वान् । देवान् । उषःऽबुधः ।**
**विप्रः । होता । इह । वक्षति ॥ ९ ॥**

स्कन्दस्वामीयम् ।

आकीमिति निपात(अद ? आङ)र्थे वक्षतीत्ये(ते)नाख्यातेन सम्बन्धयितव्यः । सूर्यसम्बन्धिनो रोचना(द्) रोचनादीप्ताद् द्युलोकादादित्यमण्डलाद् वा विश्वान् देवान् उषर्बुधः उषःकाले यागगमनार्थं ये बुध्यन्ते त उषर्बुधः तान् । विप्रो मेधावी होता वा अग्निः इह यज्ञे आवक्षति । लोडर्थे[3]ऽयं पञ्चमो लकारः । आवहतु ॥ ९ ॥

वेङ्कटमाधवीयम् ।

आकीं । सूर्यस्य[4] दिव आवहत्वग्निः सर्वान् देवान् प्रातः प्रबुद्धान् मेधाव्यत्र ॥९॥

**विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना ।**
**पिबा मित्रस्य धामभिः ॥ १० ॥**

**विश्वेभिः । सोम्यम् । मधु । अग्ने । इन्द्रेण । वायुना । पिब । मित्रस्य । धामऽभिः । ॥ १० ॥**

स्कन्दस्वामीयम् ।

विश्वेभिः सर्वैः सह सोम्यं सोममयं मधु हे अग्ने ! पिब(त् सा ?) रसोऽत्र द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च मधूच्यते । इन्द्रेण वायुना मित्रस्य

१. 'येति च स्तोतव्या म' क. पाठः., 'येति चे' ख. पाठः. २. 'ज्या' ग. पाठः. ३. 'र्थे प' ख. पाठः. ४. 'र्यदि' ख. पाठः. 'र्यादि' ग. पाठः.

च धामभिः । धामशब्दस्तेजोवचनो वा । अथवा धामानि (त्रया ? त्री)णि भवन्ति, स्थानानि नामानि जन्मानीति । धामभिश्चात्र तत्सम्बन्धो मित्र एव लक्ष्यते । मित्रस्य यानि तेजांसि स्थानानि नामानि जन्मानि वा तैः सम्बन्धे- नैव मित्रेणैव सहेत्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

विश्वेभिः सोम्यम् । अग्ने ! विश्वैर्देवैः सह सोममयं मधु पिबेन्द्रवायुभ्यां[1] मित्रस्य च सर्वैः तेजोभिः । देवानां बहूनि धामानि भवन्ति । यैस्तत्र सन्निधानं कुर्व- न्तीति वक्ष्यामः ॥ १० ॥

त्वंहोतामनुर्हितोग्नेयज्ञेषुसीदसि ।
सेमंनोअध्वरंयज ॥ ११ ॥

त्वम् । होता । मनुःऽहितः । अग्ने । यज्ञेषु । सीदसि । सः । इमम् । नः । अध्वरम् । यज ॥ ११ ॥

स्कन्दस्वामीयम् ।

(सेमन ? सेममिति) तच्छब्दाद्यच्छब्दोऽध्याहर्तव्यः । यस्त्वं होता मनु- र्हितः मनुना प्रजा(पतिना) निहितः मनुष्येषु वा निहितः मनुष्येभ्यो वा नि- हितः । हे अग्ने ! यज्ञेषु सीदसि यो होतृत्वं कर्तुं यज्ञेषु सीदसीत्यर्थः । सः इमं नः अध्वरं यज्ञं होतृत्वेन निपद्य यज ॥ ११ ॥

वेङ्कटमाधवीयम् ।

त्वं होता । त्वं होता मनुष्यैर्निहितोऽग्ने ! यज्ञेषु सीदसि । स त्वमस्माकमिमं यज्ञं यज ॥

युक्ष्वाह्यरुषीरथेहरितोदेवरोहितः ।
ताभिर्देवाँइहावह ॥ १२ ॥

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥ १२ ॥

---

1. 'भ्यामिन्द्रस्य' क. ग. पाठः.

## स्कन्दस्वामीयम्।

हीति पदपूरणः। युक्ष्व अरुषीः। ....चतेर्वोचते वार्न् पूर्वस्य(?) अरुषशब्दो दीप्तवचनः बलव(न्त्व? त्वा)द् दीप्ताः। अथवा अरुषेति रय्यातीति(?) गतिकर्मसु पाठादरुषशब्दो गन्तृवचनः, ग(न्तॄन्? न्त्रीः)। (त्वयुञ्जानि? क युञ्जानाः)। उच्यते। स्वे रथे। हरितः हरिवर्णाः। हे देव! अग्ने! । रोहितः, आदिष्टोपयोजनमेतदग्नेरश्वानां नामधेयम्। आत्मीया बडवा युक्त्वा च ताभिः देवान् इहावह ॥ १२ ॥

### वेङ्कटमाधवीयम्।

युक्ष्वाहि। योजय रोचमाना रोहितवर्णा अश्वाः स्वरथे। योजयित्वा च ताभिरिह देवानावह। आग्नेयं सूक्तमन्ये निपातभाज इति वैश्वदेवं भवति ॥ १२ ॥

इति प्रथमस्य प्रथमे सप्तविंशो वर्गः॥

---

**इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः।**

**मत्सरासस्तदोकसः ॥ १ ॥**

**इन्द्र। सोमम्। पिब। ऋतुना। आ। त्वा। विशन्तु। इन्दवः। मत्सरासः। तत्ऽओकसः ॥ १ ॥**

## स्कन्दस्वामीयम्।

ऋतुदेवता। सर्वत्र चर्तुर्देवता। वक्ष्यमाणा ऋतुसहिता देवताः, देवता न केवलाः। तत्राद्या तावदैन्द्री। हे इन्द्र! सोमं पिब ऋतुना पीयमानाश्च आ त्वा विशन्तु त्वामाविशन्तु त्वदुदरं प्रविशन्त्वित्यर्थः। के। इन्दवः सोमा(स?)ः। कीदृशाः। मत्सरासः तृप्तिकराः तदोकसः तन्निवासाः सर्वदा त्वदुदरस्थायिन इत्यर्थः ॥ १ ॥

### वेङ्कटमाधवीयम्।

इन्द्रसोमम्। ऋतव्यं सूक्तम्। इन्द्र! त्वमृतुना सह[४] पिब सोमम्। आख्यातानुदात्तत्वे कारणमुक्तम्। आ विशन्तु त्वां दीप्ताः सोमास्तदेकनिलयास्तस्मिन्नेवेन्द्रे! तिष्ठन्तः ॥ १ ॥

---

१. 'हृ', २. 'नीनि। उ' ख. पाठः. ३. 'स्थूस' क. ख. पाठः. ४. 'द्व सोमं पिब आ', ५. 'न्द्रे' क. ग. पाठः.

**मरु॑तः॒पिब॑तऋ॒तुना॑पो॒त्राद्य॒ज्ञंपु॑नीतन ।**

**यू॒यंहिष्ठासु॑दानवः ॥ २ ॥**

**मरु॑तः । पिब॑त । ऋ॒तुना॑ । पो॒त्रात् । य॒ज्ञम् । पु॒नी॒त॒न॒ । यू॒यम् ।**

**हि । स्थ । सु॒ऽदा॒न॒वः॒ ॥ २ ॥**

## स्कन्दस्वामीयम् ।

ऋङ् मारुती । ऋग् द्वितीया मरुद्देवता । हे मरुतः! पिबत ऋतुना सह । किम् । सामर्थ्यात् सोमम् । कुतः । पोत्रात् पोतुः स्वभूतात् पात्रात् । पीत्वा यज्ञमस्मदीयं पुनीतन शोधय(त) व्यपगतदोषं कुरुतेत्यर्थः । (त ? क)स्मात् । यूयं हि ष्ठा सुदानवः । हिशब्दो यस्मादर्थे । सुदानुशब्दो दानवचनो दातृवचनो वा । यस्माद् यूयं शोभनदानाः शोभना वा दातारः । तत्र च सम्बोध(नः)नासम्भवात् सुदान(व) इत्यतिरिक्त एव प्रातिपदिकार्थे प्रत्ययेनामन्त्रितप्रथमा । कथम् । प्रतिपाद्यार्थप्रत्यभिमुखीकरणं हि सम्बोधनमुच्यते । तद् यत्र तदर्थः प्रसिद्धोऽर्थान्तरं प्रतिपाद्यं तत्र सम्भवति । यथा (तं हे ? त्र ह्ये )व मरुतां मरुत्त्वं, यथावा लोके राजन्! इदं च कुर्विति । यत्र तु तदर्थ एव स्वार्थं वा प्रतिपाद्यते राजा भव यस्माद् राजासि अतो बुध्यस्व त्वं हि रत्नधा असीति, न तत्र सम्बोधनस्य संभवः । आमन्त्रितविभक्तिश्रुतिसामर्थ्याद् यूयं हि ष्ठेत्यनेन सुदानव इत्यसम्बन्धासम्भवात् सोमस्य पातारो यज्ञस्य पवितारः इति वाक्यशेषः । यस्माद् यूयं सोमस्य पातारो यज्ञस्य पवितारः स्थ हे सुदानवः! तस्मात् पिबत सोमं यज्ञं च पुनीतनेति ॥ २ ॥

## वेङ्कटमाधवीयम् ।

मरुतः पिबत । मरुतः! पिबत ऋतुना सह पोतुः प्रदीयमानं[1] यज्ञं[2] शोधयत । यूयं हि भवथ सुदानाः[3] ॥ २ ॥

**अ॒भि य॒ज्ञंगृ॑णीहि॒नोग्ना॑वो॒नेष्टः॒पिब॑ऋ॒तुना॑ ।**

**त्वंहिर॑त्न॒धाअसि॑ ॥ ३ ॥**

---

१. 'ती' क. पाठः. २. 'नं सोमं य' क. ग. पाठः. ३. 'म' ख. पाठः.

अभि । यज्ञम् । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना । त्वम् । हि । रत्नऽधाः । असि ॥ ३ ॥

स्कन्दस्वामीयम् ।

तथा त्वा(ष्ट्री) । तृतीया ऋक् त्वष्टृदेवता । अभिगृणीहि अहो शोभन इत्येवमभिष्टुहि । कम् । यज्ञमस्माकम् । अथवा यज्ञ इति सप्तम्यर्थे द्वितीया । ++ तु कर्तृत्वेनाभिष्टुहि यज्ञे अस्माकम् अस्मान् स्तुव(न्ता ? तो) यज्ञे प्रयुङ्क्ष्वेत्यर्थः । हे ग्नावः! । ग्ना इति स्त्रीनाम पत्नीभिः स्त्रीभिः (त्व ? त)द्वन्! नेष्टः! । देवसत्रे किल त्वष्टा नेष्टासीत् । तदपेक्षमिदं नेष्टरि(ति) त्वष्टुः सम्बोधनम् । पिब च ऋतुना सह सोमम् । कस्मात् । त्वं हि रत्नधाः धनानां दाता(रा ?)सि यस्मात्, पीत्वा च धनमस्मभ्यं दातासीत्यर्थः ॥ ३ ॥

वेङ्कटमाधवीयम् ।

अभियज्ञम् । कुर्वित्यनुज्ञा अभिगिरणम्[1] । अनुमन्यस्वास्माकं यज्ञं देव ! पत्नीवन् ! नेष्टः! । पिब च[2] सोममृतुना । त्वमसि रत्नानां दाता त्वष्टा नेष्टोक्त इति ॥ ३ ॥

अग्ने देवाँ इहा वह सादया योनिषु त्रिषु ।
परि भूष पिब ऋतुना ॥ ४ ॥

अग्ने । देवान् । इह । आ । वह । सादय । योनिषु । त्रिषु । परि । भूष । पिब । ऋतुना ॥ ४ ॥

स्कन्दस्वामीयम् ।

आग्नेयी । चतुर्थी ऋग् (अग्नि) देवता । हे अग्ने ! देवान् इहावह आहूय च सादय उपवेशय योनिषु स्थानेषु त्रिषु सवनाख्येषु । (स्वा ? सा)दयित्वा च परिभू(य ? ष) परिपूर्वो भवतिः परिग्रहे । यथा यागार्थं परिग्रहीतव्यं तथा परिगृहाण यजेत्यर्थः । अथवा भूष(य ?) अलङ्कार इत्यस्यैतद्रूपं, परिभूष स्वमण्डलदेवान् । स्वयमपि च (विश्व ? पिब) ऋतुना सह सोमम् ॥ ४ ॥

---

१. 'ग' ग. पाठः. २. 'च मे सो' क. पाठः.

## वेङ्कटमाधवीयम् ।

अग्ने देवाँ। अग्ने! देवानिहावह। सादय च यज्ञनामकेषु त्रिषु स्थानेषु। अलङ्कुरु च यज्ञं। पिब च सोममृतुना॥ ४॥

ब्राह्मणादिन्द्रराधसःपिबासोममृतूँरनु।
तवेद्धिसख्यमस्तृतम्॥ ५॥

ब्राह्मणात्। इन्द्र। राधसः। पिब। सोमम्। ऋतून्। अनु।
तव। इत्। हि। सख्यम्। अस्तृतम्॥ ५॥

## स्कन्दस्वामीयम्।

ऐन्द्रयेवं पञ्चमी। (गृहाण यजेत्यर्थः अथवा भूषय?) (पञ्चमी) ऋगिन्द्रदेवता। ब्रह्मन्शब्दोऽत्र ब्राह्मणाच्छंसिनि वर्तते। तस्य स्वभूतात् ब्राह्मणात् हे इन्द्र! राधसः धनात् पात्राख्यात् पिब सोमम् ऋतून् अनु ऋतूनां पश्चाद् ऋतुभिः पीत इत्यर्थः। तस्मात् तवे(धि? द्धि) इच्छब्दः पादपूरणः। यस्मात् तव सख्यम् अस्तृतम् अहिंसितम्। न कश्चिद्धिंसितुं (श)क्नोति। स्थि(र)सख्योऽसीत्यर्थः॥ ५॥

## वेङ्कटमाधवीयम्।

ब्राह्मणादिन्द्र। ब्राह्मणाच्छंसिनः सोममिन्द्र! पिब सहर्तुभिः। तव[२] हि सख्यमृतुभिर्न[३] विच्छिद्यते॥ ५॥

युवंदक्षंधृतव्रतमित्रावरुणदूळभम्।
ऋतुनायज्ञमाशाथे॥ ६॥

युवम्। दक्षम्। धृतऽव्रता। मित्रावरुणा। दुःऽदभम्। ऋतुना।
यज्ञम्। आशाथे इति॥ ६॥

---

१. 'वच प' ख. पाठः. २. 'व स' क. पाठः. ३. 'र्नैच्छि' ख. पाठः.

## स्कन्दस्वामीयम् ।

मित्रावरुणयोः (षष्ठी) । षष्ठ्यृङ्मित्रावरुणदेवता । युवमिति षष्ठ्यर्थे प्रथमा । युवयोः दक्षं बलं धृतव्रत! मित्रावरुण! । उभयत्र द्विवचनादेशाकारस्य छान्दसं सांहितं ह्रस्वत्वम् । व्रतमिति कर्मनाम । धृतानि सर्वकर्माणि स्वकर्माणि वा याभ्यां तौ धृतव्रतौ सर्वकर्मणां हेतुभूतौ स्वकर्मणां वा नित्यमनुष्ठा(दा)तारौ इत्यर्थः । मित्रावरुण दूळभम् । द(भ्नाव्भ्रो ? भ्नो)तेर्वधकर्मण एतद्रूपम् । दुर्हणम् । युवयोर्बलं न कश्चिदपि जेतुं शक्नोतीत्यर्थः । यावीदृशौ स्थः ताव्रु(नां ? तुना) सह यज्ञमाशाथे । लोडर्थेऽयं लट् । अश्नुवाथां व्याप्नुतम् । यज्ञे सोमं (पी ? पिब)तमित्यर्थः ॥ ६ ॥

### वेङ्कटमाधवीयम् ।

युवं दक्षं । युवां प्रवृद्धं[2] धृतकर्माणौ मित्रावरुणौ! शत्रुभिर्हिंसितुमशक्यं[3] यज्ञमृतुना सहानशाथे ॥ ६ ॥

**इति प्रथमस्य प्रथमे अष्टाविंशो वर्गः ॥**

---

**द्रविणोदाद्रविणसोग्रावहस्तासोअध्वरे ।**
**यज्ञेषुदेवमीळते ॥ ७ ॥**

**द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे । यज्ञेषु । देवम् । ईळते ॥ ७ ॥**

## स्कन्दस्वामीयम् ।

चतस्रो द्रविणोदसः । सप्तम्याद्याश्चतस्र ऋचः द्रविणोद(स्य ? सः)ईळत इत्यस्य स्तुत्यापेक्षत्वाद् देवतानां च स्तुत्यत्वाद् द्रविणोदःशब्दस्य च देवतावचनत्वात् । द्रविणो(दा) द्वितीयार्थे प्रथमा । द्रविणोदसम् । द्रविणसः द्रविण(इ ? मि)ति धननाम, एतदिच्छ(ति ? न्ति) द्रविणस्य(न्तीत्यपि ? न्तीति क्यचि) सुगागमः । द्रविणस्युर्विप(न्य ? र्य)य इति यथा । द्रविणस्यतेः छान्दसत्वात् क्विप् क्विपि चाद्युदात्तत्वम् । द्रविणसाधनका(म ? मा) इत्यर्थः । ग्रावह-

१. 'त्वम् । कर्मा', २. 'द्ध', ३ 'भिरभि(हिं)सितुं' ख. पाठः.

स्तासः गृहीताभि(ष्ट ? ष)वग्रा(व ? वा)ण ऋत्विजः । अध्वरे यज्ञेषु । अध्वरशब्दो- ऽत्र ध्वरतेर्हिंसाकर्मणः क्रियाशब्दः, न यज्ञनाम । व्यत्ययेन चैकवच(न ? नम्) । सादृगुण्याद् रक्षआदिभिरहिंसितेषु यज्ञेषु । अथवा अध्वरशब्दः समस्तज्योति- ष्टोमादिवचनः । यज्ञशब्द(स ? स्त)दवयवभूताभ्यासविशेषवचनः । ज्योतिष्टो- मादावध्वरे येऽभ्यासविशेषाख्या यज्ञास्तेषु । देवं दातारं दीप्तं वा । ईळते स्तु- वन्ति ॥ ७ ॥

वेङ्कटमाधवीयम् ।

द्रविणोदाः । द्रविणोदा द्रविणसो धनस्य दाता भवति । तं ग्रावहस्तासो यज्ञेषु देवं स्तुवन्ति । यज्ञेष्वध्वर इत्यनयोरर्धर्चभेदात् सङ्गतिः । यास्कस्त्वाह — द्रविणोदाः यस्त्वं द्रविणसादिन इति वा द्राविणसस्तस्मात् पिबत्विति वा । यज्ञेषु देवमीळते याचन्ति स्तुवन्ति वर्धयन्ति पूजयन्ति वेति ॥ ७ ॥

द्रविणोदाददातुनोवसूनियानिशृण्विरे ।
देवेषुतावनामहे ॥ ८ ॥

द्रविणःऽदाः । ददातु । नः । वसूनि । यानि । शृण्विरे । देवेषु । ता । वनामहे ॥ ८ ॥

स्कन्दस्वामीयम् ।

द्रविणोदा ददातु अस्मभ्यं वसूनि यानि शृण्विरे । लडर्थेऽयं लिट् कर्मणि च । श्रूयन्ते । उत्कृष्टत्वात् प्रभूतत्वाच्च सर्वलोकप्रका(शानि) भवन्तीत्यर्थः । वयमपि देवेषु । संप्रदानस्येयमधिकरणत्वेन विवक्षा 'सममब्राह्म(णो ? णे) दा- नमि'ति यथा । देवेभ्यः । तानि हवीरूपाणि कृत्वा वनामहे । वनतिरत्र सामर्थ्याद् दानार्थः । 'वंस्वानो वार्यापुर्वि'ति यथा । दद्म इत्यर्थः । अथवा वनिर्हि संभक्त्यर्थ एव । देवेष्विति 'निमित्तात् कर्मसंयोग' इत्येवं सप्तमी चर्मणि द्वीपिनं हन्तीति यथा । देवार्थं संभजामहे देवान् यष्टुं परिगृह्णीम इत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

द्रविणोदाः । द्रविणोदा ददात्वस्मभ्यं वसूनि गवादीनि[2] यानि विश्रुतानि । तानि वयं देवेषु स्थितानि द्रविणोदसं याचामहे । स तत आदाय नो ददातु ॥ ८ ॥

१. 'णोदसा' क., 'णसः दीन' ख. पाठः. २. 'नवानि' ख. पाठः.

द्रविणोदाःपिपीषति जुहोत प्र च तिष्ठत ।
नेष्ट्रादृतुभिरिष्यत ॥ ९ ॥

द्रविणःऽदाः । पिपीषति । जुहोत । प्र । च । तिष्ठत । नेष्ट्रात् । ऋतुऽभिः । इष्यत ॥ ९ ॥

स्कन्दस्वामीयम् ।

द्रविणोदाः पिपीषति पि(ब)तेश्छान्दसत्वा(द्दी ? दी)त्वं, पिपासति पातुमिच्छति सोमम्। एतद् ज्ञात्वा जुहोत अध्वर्यवः[1]। प्र च तिष्ठत प्रतिष्ठ(त्वं ? ध्वं) च । (जुहोत ?) सोमं हुत्वा चाहवनीयदेशात् सदः प्रतिगच्छ(न्ती ? ते)त्यर्थः । कुतः पिपासति । उच्यते । नेष्ट्रात् नेष्टुः स्वभूतात् पात्रात् । नच केवलः । किं तर्हि । ऋतुभिः, ऋतुभिः सह । इष्यत । इषु गतौ । ग(ता ? च्छत) । मा विळम्बध्वमित्यर्थः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

द्रविणोदाः । द्रविणोदाः सोमं पातुमिच्छति । ततो जुहोताध्वर्यवो हविर्धानात् प्रतिष्ठत च नेष्टुः स्वभूताच्चमसादृतुभिः सह यष्टुमिच्छतः ॥ ९ ॥

यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे ।
अध स्मा नो ददिर्भव ॥ १० ॥

यत् । त्वा । तुरीयम् । ऋतुऽभिः । द्रविणःऽदः । यजामहे । अध । स्म । नः । ददिः । भव ॥ १० ॥

स्कन्दस्वामीयम् ।

यदिति निपातो यस्मादर्थे । यस्मात् त्वाम् । तुरीयं, यजामह इत्येतत्क्रियाविशेषणमेतत् । पूर्वद्रविणोदोदेव(त्याग्रायत्रा ? तात्रया)पेक्षश्चात्र

१. 'च्छेत्य' ख. पाठः.

तुरीयव्यपदेशः । चतुर्थमिदमृतुभिः सह हे द्रविणो(दा ? दो !) यजामहे । अध स्म । अधेति तस्मादर्थे । स्मशब्दस्तु पदपूरणः । तस्मान्नः अस्मभ्यं ददिर्दात धनानि भव त्वम् ॥ १० ॥

वेङ्कटमाधवीयम् ।

यत्त्वा तुरीयम् । यदा त्वां चतुर्थम[1]ऋतुभिः सह द्रविणोदो! यजामहेऽ[2]थ त्वमस्माकं भव दाता । स्मेति स्फुटीकरणार्थः ॥ १० ॥

**अश्विनापिबतंमधुदीद्यग्नीशुचिव्रता ।**
**ऋतुना यज्ञवाहसा ॥ ११ ॥**

**अश्विना । पिबतम् । मधु । दीद्यग्नी इति दीदिऽअग्नी । शुचिऽव्रता । ऋतुना यज्ञऽवाहसा ॥ ११ ॥**

स्कन्दस्वामीयम् ।

अश्विन्येकादशी ज्ञेया । एकादश्यृ(न ? ग)श्विनीदेवता ज्ञातव्या । अश्विना पिबतं मधु सोमाख्यम् । दीद्यग्नी, दीव्यतेर्द्योतनार्थस्य दीदिः अत्यर्थदी(प्ता ? प्तः) । दीदिरग्निः ययोः सम्बन्धी (ता ? तौ) दीद्य(ग्नि ? ग्नी) । केन सम्बन्धेन सम्बन्धी । जन्यतया । कुत एतत् । युवं शक्रा मायाविनेत्यश्विनोररणिमन्थनदर्शनाद् दीप्तस्याग्नेर्जनयितारौ । पितरावित्यर्थः । शुचिव्रता शुद्धकर्माणौ । मा च केवला-(येय ? वेव) (पा ? पिब)तम् । किंतर्हि । ऋतुना सह । हे यज्ञवाहसा! अन्तं यज्ञस्य प्रापयितारौ समर्पयितारावित्यर्थः ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अश्विना पिबतम् । अश्विनौ! पिबतं सोमम[3]रण्योर्दीप्तस्याग्नेर्जनयितारौ शुचिकर्माणावृतुना सह यज्ञस्य वोढारौ ॥ ११ ॥

**गार्हपत्येनसन्त्यऋतुनायज्ञनीरसि ।**
**देवान्देवयते यज ॥ १२ ॥**

---

१. 'र्थमृतु', २. 'थ' क. पाठः. ३. 'यर्मणो दीप्त' ग., 'रण्ये दीप्त' ख. पाठः.

गार्हऽपत्येन । सन्त्य । ऋतुना । यज्ञऽनीः । असि । देवान् । देवऽयते । यज ॥ १२ ॥

स्कन्दस्वामीयम् ।

आग्नेयी (ते ?)द्वादशी । द्वादश्यृगग्निदेवता । गार्हपत्येनेति हेतौ तृतीया । गृहपतित्वेन हेतुना । हे सन्त्य ! । 'षणु दा(ने)' इत्यस्यैतद् रूपम् । (द ? दा)तरग्ने ! । ऋतुना सह । यज्ञनीः यज्ञस्य देवान् प्रति प्रापयितासि । अतो ब्रवीमि, देवान् देवयते देवान् कामयमानस्य ममार्थाय यज ॥ १२ ॥

वेङ्कटमाधवीयम् ।

गार्हपत्येन । कथमहं गृहपतिः स्वामि[1]ति सन्त्य ! सनोतिर्दानकर्मणः, सतां वा हित ! ऋतुना सह यज्ञस्य नेता[2]सि सदेवान् यज यजमानाय ॥ १२ ॥

इति प्रथमस्य प्रथमे एकोनत्रिंशो वर्गः ॥

---

आत्वावहन्तुहरयोवृषणंसोमपीतये ।
इन्द्रत्वासूरचक्षसः ॥ १ ॥

आ । त्वा । वहन्तु । हरयः । वृषणम् । सोमऽपीतये । इन्द्र । त्वा । सूरऽचक्षसः ॥ १ ॥

स्कन्दस्वामीयम् ।

ऐन्द्रं त्वनन्तरं सूक्तम् । ऐन्द्रमेतदनन्तरं सूक्तम् । आवहन्तु त्वां हरयः अश्वाः । कीदृशम् । वृषणं वर्षितारम् । किमर्थम् । सोमपीतये । हे इन्द्र ! त्वा । षष्ठ्यर्थे द्वितीया । तव स्वभूताः । कीदृशः । सूरचक्षसः । सूर आदित्यः, चक्षो(र्द ? द)र्शनम् । सूरस्येव चक्षो येषां ते सूरचक्षसः बलवत्त्वादादित्यवद् दीप्तिमन्त इत्यर्थः । सूर्यदर्शिनो वा सूरचक्षसः ॥ १ ॥

वेङ्कटमाधवीयम् ।

आ त्वा वहन्तु । आवहन्तु त्वामश्वा वर्षितारं सोमपानायेन्द्र[3] ! त्वा सुवीर[4]दर्शना दूरेऽपि पश्य(तः ? न्तः) । त्वाशब्दावृत्तिरर्थभेदात् ॥ १ ॥

---

१. 'स्वामीति' क. पाठः. २. 'सि दे' ख. पाठः. ३. 'र्य' ख. ग. पाठः. ४. 'नाद् दू' ग. पाठः.

इमाधानाघृतस्नुवोहरीइहोपवक्षतः ।
इन्द्रंसुखतमेरथे ॥ २ ॥

इमाः । धानाः । घृतऽस्नुवः । हरी इति । इह । उप । वक्षतः ।
इन्द्रम् । सुखऽतमे । रथे ॥ २ ॥

स्कन्दस्वामीयम् ।

द्वितीयाश्रुतेरत्र तद्यो(ग्यः) कर्मप्रवचनीयः प्रतिशब्दोऽध्याहार्यः । इमा धाना घृतस्नुवः । 'ष्णु प्रस्रवणे' । अलङ्करणोपस्तरणाभिघारणघृतस्राविणीः प्रति । यज्ञे हि हर्योः ऋजीषं भागो धानाश्च । अत इदं तद्भागेन धानादिभिर्हर्योः प्रोत्साहनार्थं न देशोपलक्षणम् । हरी इन्द्राश्वौ । इह कर्मणि । उपवक्षतः । उपे(त्ये ? ति) आ इत्येतस्य स्थाने । लोडर्थे च पञ्चमो लकारः । आवहताम् । इन्द्रम् । कम् । सुखतमे रथे । सप्तमीनिर्देशात् स्थितमिति वाक्यशेषः । तृतीयार्थे वा सप्तमी, सुखतमेन रथेन ॥ २ ॥

वेङ्कटमाधवीयम् ।

इमा धानाः । इन्द्राश्वयोर्भागधेयभूता इमा धाना उपस्तरणाभिघारणाभ्यां घृतस्राविण्यः । तदर्थमश्वाविन्द्रमिह सुखतमे रथे स्थापयित्वोपवक्षतः ॥ २ ॥

इन्द्रंप्रातर्हवामहइन्द्रंप्रयत्यध्वरे ।
इन्द्रंसोमस्यपीतये ॥ ३ ॥

इन्द्रम् । प्रातः । हवामहे । इन्द्रम् । प्रऽयति । अध्वरे । इन्द्रम् ।
सोमस्य । पीतये ॥ ३ ॥

स्कन्दस्वामीयम् ।

प्रातः प्रक्रमकाले हवामहे इन्द्रमे(व) प्रयति प्रवृत्ते । अध्वरे यज्ञे । कीद(शे ? शम्) । इन्द्रम् । 'इदि परमैश्वर्ये', सुष्ठु ईश्वरम् । पुनरिन्द्रशब्दश्रुतिसामर्थ्यात् समाप्यमान इति वाक्यशेषः । इन्द्रमेव समाप्यमाने यज्ञे । किमर्थं सोमस्य पीतये ॥ ३ ॥

१. 'गोप' क. ख. पाठः. २. 'मंशावश्वा' क. पाठः. ३. 'तिगच्छति' क. ख. पाठः.

वेङ्कटमाधवीयम्।

इन्द्रं प्रातः। इन्द्रं प्रातः[1] वर्तमाने यज्ञे सोमपानार्थं हवामहे। पुनरिन्द्रमिति पूरणम्॥ ३॥

उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः।

सुते हि त्वा हवामहे॥ ४॥

उप। नः। सुतम्। आ। गहि। हरिऽभिः। इन्द्र। केशिऽभिः। सुते। हि। त्वा। हवामहे॥ ४॥

स्कन्दस्वामीयम्।

नः अस्माकं स्वभूतं सुतं सोमम् उपागहि उपागच्छ हरिभिः। हे इन्द्र! केशिभिः[2] केशवद्भिः प्रलम्बकेसरैः। कस्मात्। सुते हि यस्माद् अभिषुते सोमे त्वां वयं हवामहे यन्ता(र)माह्वयामः॥ ४॥

वेङ्कटमाधवीयम्।

* उत्तरा निगदसिद्धा॥ ४॥

सेमं नः स्तोममा गह्युपेदं सवनं सुतम्।

गौरो न तृषितः पिब॥ ५॥

सः। इमम्। नः। स्तोमम्। आ। गहि। उप। इदम्। सवनम्। सुतम्। गौरः। न। तृषितः। पिब॥ ५॥

स्कन्दस्वामीयम्।

स इमं नः अस्माकं स्वभूतं स्तोमम् आगहि उपागच्छ इदं सवनं, सवनमिति यज्ञनाम, इमं च यज्ञम्। सुतमभिषुतं च सोमम्। अ(थ)वेदं सवनमिति सप्तम्यर्थे प्रथमा। अस्मिन्[3] यज्ञे स्तोमं सुतं च सोममुपागच्छ।

---

१. 'क् प्रव' ख. पाठः. २. 'भिः प्र' क. पाठः. ३. 'न्नर्थे यज्ञस्तो' क. ख. पाठः.

* उत्तरा 'उप न' इति चतुर्थी ऋक्।

उपागत्य च गौरो न तृषितः। गौर इत्युत्तरपदलोपो द्रष्टव्यः भीमसेनो भीम इति यथा। गौरखर इव, यथा गौरः खरस्तृषितः उदकं पिबेत् तद्वत् पिब सोमम् ॥ ५ ॥

वेङ्कटमाधवीयम्।

सं मन्मः। स त्वमिममस्माकं स्तोत्रमागच्छ। आगत्य चेमं सुतं सोमं तृषितो गौरमृग इवोदकमुपपिब ॥ ५ ॥

इति प्रथमस्य प्रथमे त्रिंशो वर्गः ॥

---

इमेसोमासइन्दवःसुतासोअधिबर्हिषि।
ताँइन्द्रसहसेपिब ॥ ६ ॥

इमे। सोमासः। इन्दवः। सुतासः। अधि। बर्हिषि। तान्। इन्द्र। सहसे। पिब ॥ ६ ॥

स्कन्दस्वामीयम्।

इमे सोमासः। इन्दवः इ(न्धि? न्दे)र्दीप्तिकर्मण एतद्रूपम्। स्वया दीप्त्या दीप्ताः सुतासः अधिबर्हिषि बर्हिषः उपरि। तान् हे इन्द्र!। सहसे, बलनामैतत्, तादर्थ्ये चतुर्थी, आत्मनो बलार्थं पिब ॥ ६ ॥

वेङ्कटमाधवीयम्।

इमे सोमासः। इमे सोमा दीप्ताः सुता बर्हिष्यध्यासते। तानिन्द्र! बलाय पिब ॥ ६ ॥

अयंतेस्तोमोअग्रियोहृदिस्पृगस्तुशन्तमः।
अथासोमंसुतंपिब ॥ ७ ॥

अयम्। ते। स्तोमः। अग्रियः। हृदिऽस्पृक्। अस्तु। शम्ऽतमः। अथ। सोमम्। सुतम्। पिब ॥ ७ ॥

स्कन्दस्वामीयम् ।

अयं तवासत्कृतः स्तोमः अग्रियः प्रधानभूतः हृदिस्पृगस्तु हृदयस्य स्प्रष्टास्तु तुभ्यं रोचतामित्यर्थः । लोकेऽपि हि यद् रोचते तद् हृदयं स्पृशतीत्युच्यते । अथवा हृदयस्पर्शेन (न?) वात्रावधारणम् (वक्ष्य?उच्य)ते । चित्तेन त्वयावधार्यतामित्यर्थः । कीदृशः । शंतमः सुखतमः । अथ अनन्तरं च सुतं सोमं पिब ॥ ७ ॥

वेङ्कटमाधवीयम् ।

अयं ते । अयं तव स्तोमो मुख्यो हृदिस्पृगस्तु सुखतमः । अथ सोमं सुतं पिब ॥ ७ ॥

**विश्व॒मित्सव॑नंसु॒तमिन्द्रो॒मदा॑यगच्छति ।**

**वृ॒त्र॒हासोम॑पीतये ॥ ८ ॥**

**विश्व॑म् । इत् । सव॑नम् । सु॒तम् । इन्द्रः॑ । मदा॑य । ग॒च्छ॒ति॒ । वृ॒त्र॒ऽहा । सोम॑ऽपीतये ॥ ८ ॥**

स्कन्दस्वामीयम् ।

सवनमिति यज्ञनाम । विश्वं सवनमिति चोभयत्र सप्तम्यर्थे प्रथमा । इच्छब्दः पदपूरणः । सर्वस्मिन् यज्ञे । सुतं सोमं प्रतीन्द्रो गच्छति वृत्रहा । किमर्थम् । मदाय सोमपीतये मदार्थं यत् सोमपानं तदर्थम् । अथवा मदायेत्येतत् सुतमित्यनेन सम्बध्यते । मदार्थमभिषुतोऽयं सोमस्तस्यार्थ(मि? इ)ति ॥ ८ ॥

वेङ्कटमाधवीयम् ।

विश्वमित् । विश्वमेव सुतं सोममिन्द्रो मदार्थं[2] गच्छति शत्रुहा सोमपानार्थम् । पानेन मदो भवति ॥ ८ ॥

**सेमंनः॒कामः॒मापृ॑ण॒गोभि॒रश्वैः॑शतक्रतो ।**

**स्तवा॑मत्वास्वा॒ध्यः॑ ॥ ९ ॥**

**सः । इ॒मम् । नः॒ । काम॑म् । आ । पृ॒ण॒ । गोभिः॑ । अश्वैः॑ । शतक्र॑तो॒ इति॑ शत॒ऽक्र॒तो॒ । स्तवा॑म । त्वा॒ । सु॒ऽआ॒ध्यः॑ ॥ ९ ॥**

१. 'यस्माद् रो' क. पाठः. २. 'र्थमाग' ख. पाठः.

स्कन्दस्वामीयम् ।

स त्वम् इमं नः कामम् इच्छाम् आपृण । 'पृण प्रीणने' । आप्रीणय तर्पय पूरयेत्यर्थः । केन । गोभिरश्वैश्च । हे शतक्रतो! बहुकर्मन्! बहुप्रज्ञ! वा स्तवाम त्वा । सेमन्न इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहर्तव्यः । यं त्वां स्तुतवन्तो वयं स्वाध्यः, आध्यानं आधीः प्रार्थना, शोभनप्रार्थनाः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

सेमन्नः । स त्वं गवादिभिरिममस्माकं काममापूरय शतकर्मन्! स्तवाम त्वा सुख[2]-कर्माणः ॥ ९ ॥

इति प्रथमस्य प्रथमे एकत्रिंशो वर्गः ॥

इन्द्रावरुणयोरहंसम्राजोरवआवृणे ।
तानोमृळातईदृशे ॥ १ ॥

इन्द्रावरुणयोः । अहम् । सम्ऽराजोः । अवः । आ । वृणे ।
ता । नः । मृळातः । ईदृशे ॥ १ ॥

स्कन्दस्वामीयम् ।

ऐन्द्रावरुणमुत्तरम् । उत्तरं सूक्तमैन्द्रावरुणम् । इन्द्रावरुणयोरहं संराजोः सम्यग्दीप्तयोः स्वभूतं अवः, अव(:) पालनम्, आवृणे प्रार्थये । एतद् ज्ञात्वा ता तौ नः अस्मान् मृळातः । 'मृड सुखने' लोडर्थे च पञ्चमो लकारः । अवस्संपादनेन सुखयतः । ईदृशे प्रार्थनाविशे(षाद्? षे) । वर्तमानानिति शेषः ॥ १ ॥

वेङ्कटमाधवीयम् ।

इन्द्रावरुणयोः । इन्द्रावरुणयोरहं सर्वेषामीश्वरयोः पालनमावृणे । तौ मृळयेता-मस्मानीदृशे स्तोत्रे । यद्वा ईदृशेनावसेति ॥ १ ॥

गन्ताराहिस्थोवसेहवंविप्रस्यमावतः ।
धर्तारांचर्षणीनाम् ॥ २ ॥

---

१. 'नाः । पृणते प्रार्थये ॥' (?) क. ख. पाठः. २. 'सुक' क. ग. पाठः.

गन्तारा। हि। स्थः। अवसे। हवम्। विप्रस्य। माऽवतः। धर्तारा। चर्षणीनाम्॥ २॥

स्कन्दस्वामीयम्।

हीति पदपूरणः। गन्तारा गमनशीलौ युवां स्थः अवसे पालनाय हवम् आह्वानं विप्रस्य मेधाविनः मावतः मत्सदृशस्य। धर्तारा धारयितारा च तैस्तैरुपकारैश्चर्षणीनां मनुष्याणाम्॥ २॥

वेङ्कटमाधवीयम्।

गन्तारा हि। गन्तारौ हि भवथो रक्षणार्थमाह्वानं मेधाविनो मत्सदृशस्य, धारकौ मनुष्याणाम्। तौ मयि चागच्छतम्॥ २॥

अनुकामंतर्पयेथामिन्द्रावरुणरायआ।
तावांनेदिष्ठमीमहे॥ ३॥

अनुऽकामम्। तर्पयेथाम्। इन्द्रावरुणा। रायः। आ। ता। वाम्। नेदिष्ठम्। ईमहे॥ ३॥

स्कन्दस्वामीयम्।

अन्विति पश्चादर्थे। सोमस्य च पश्चादनुकामं कामयित्वा तत्पानानन्तरमित्यर्थः। अथवानुशब्दो वीप्सायां कर्मप्रवचनीयः। कामं काममनु अ(नु)कामं, यदा यदा वयं कामयामहे तदा तदेत्यर्थः। तर्पयेथामस्मान्। हे इन्द्रावरुण!, द्विवचनादेशाकारस्येदं सांहितं ह्रस्वत्वम्, इन्द्रावरुणौ!। केन। रायः। तृतीयार्थे वा षष्ठीयम्। षष्ठीश्रु(ते)र्वैकदेशेनेति शेषः। धनेन धनस्य वात्मीयस्यैकदेशेन। आकारस्तु पदपूरणः। ता रायौ धनेन तर्पणं प्रार्थितवन्तो वयं तौ वां युवां नेदिष्ठम् इष्टत्वाद् यत् सन्निकृष्टं युवयोर्धनं तत् ईमहे याचामहे न यत् किञ्चित्॥ ३॥

वेङ्कटमाधवीयम् ।

अनुकामम् । कामानन्तरमस्मान् धनेन तर्पयेथामिन्द्रावरुणौ ! । तौ वां वयं युवयोरन्तिकतमं धनं याचामहे ॥ ३ ॥

**युवाकु हि शचीनां युवाकु सुमतीनाम् ।**
**भूयाम वाजदाव्नाम् ॥ ४ ॥**

**युवाकु । हि । शचीनाम् । युवाकु । सुऽमतीनाम् । भूयाम । वाजऽदाव्नाम् ॥ ४ ॥**

## स्कन्दस्वामीयम् ।

हिशब्दो यस्मादर्थे । यस्माद् युवाकु । युवां कामयत इति युवाकु, युष्मत्पानकाममि[1]त्यर्थः । अथवा 'यु मिश्रणे' मिश्रितं वसतीवर्यैकधनाभिरद्भिः श्रयणैर्वा । किं पुनस्तत् । सामर्थ्यात् सोमलक्षणं हविः । कस्य । शचीनाम् । शचीति कर्मनाम । सामर्थ्याद् वात्रान्तर्णीतमत्वर्थम् । यागकर्मवतामस्माकं स्वभूतम् । नच सोमलक्षणमेव हविः केवलम् । किं तर्हि । युवाकु युष्मत्कामं युष्मद्गुणमिश्रं वा[2] युष्मत्सर्वगुणसङ्कीर्तनरूपमित्यर्थः । किं तत् । सामर्थ्यात् स्तुतिलक्षणं वचनम् । सुमतीनां, मतिः स्तुतिः मन्यतेरर्चतिकर्मत्वात्, सुस्तुतीनामस्माकं स्वभूतम् । अथवा द्वावपि युवाकुशब्दौ सोमविषयावेव । मिश्रणार्थ एकः, युष्मत्पानकाममित्येवमर्थोऽपरः । अथवैवमन्यथास्यार्धर्चस्यार्थयोजना—युवाकिति बहुवचनस्य स्थान एकवचनम् । शचीनां सुमतीनामित्यपि तृतीयार्थे षष्ठी । यस्माद् युष्मत्कामाः कर्मभिः शोभनाभिश्च स्तुतिभिः वयम् । यस्मादिति वचनात् तस्माच्छब्दोऽध्याहार्यः । भूयाम वाजदाव्नाम् । भावेऽयं वनिर्द्रष्टव्यः । अन्नदा(ना)नाम् । षष्ठीश्रुतेर्लब्धारः कर्तारो वेति वाक्यशेषः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

युवाकु हि । युष्मत्कामो हि पुरुषः य[3]ज्ञानां भाजनं भवति युवाकुः सुमतीनां च । वयं च युवयोरन्नस्य दातॄ[4]णां कर्मणां भाजनं भवाम भूयास्म वेति ॥ ४ ॥

---

१. 'मिवेत्य' क. ख. पाठः. २. 'वा सर्वयुष्मद्गुण' क., 'ना सर्वं युष्मद्गुण' ख. पाठः. ३. 'प्र' ख. पाठः. ४. 'णां भा' क. पाठः.

इन्द्रः सहस्रदाव्नां वरुणः शंस्यानाम् ।
क्रतुर्भवत्युक्थ्यः ॥ ५ ॥

इन्द्रः । सहस्रऽदाव्नाम् । वरुणः । शंस्यानाम् । क्रतुः । भवति । उक्थ्यः ॥ ५ ॥

### स्कन्दस्वामीयम् ।

इन्द्रः सहस्रदाव्नां सहस्रसंख्याकदानानां वरुणः शंस्यानां स्तुत्यानामत्यन्तोत्कृष्टानां क्रतुः कर्ता भवति स्तोतृभ्यः प्रभूतानि धनानि ददातीत्यर्थः । कीदृशः । उक्थ्यः प्रशस्यनामैतद् वक्तव्यं प्रशस्यः ॥ ५ ॥

### वेङ्कटमाधवीयम् ।

इन्द्रः सहस्रदाव्नाम् । इन्द्रः सहस्रस्य[1] दातॄणामपि[2] कर्मणां कर्ता भवति । वरुणश्च प्रशंसनीयानां प्रशस्यः । अपिवा स्तोतॄन् सहस्रदाव्नः प्रशस्यांश्च करोति ॥ ५ ॥

इति प्रथमस्य प्रथमे द्वात्रिंशो वर्गः ॥

---

तयोरिदवसा वयं सनेम नि च धीमहि ।
स्यादुत प्ररेचनम् ॥ ६ ॥

तयोः । इत् । अवसा । वयम् । सनेम । नि । च । धीमहि । स्यात् । उत । प्रऽरेचनम् ॥ ६ ॥

### स्कन्दस्वामीयम् ।

इदिति पदपूरणः । तयोरिन्द्रावरुणयोः । अवसा 'हेताविʼति तृतीया । तर्पणेन पालनेन वा(म?) हेतुना ताभ्यां तर्प्यमाणाः पाल्यमाना वेत्यर्थः । सनेम संभजेमहि । किम् । सामर्थ्याद् धनम् । निधीमहि च उपभोगातिरिक्तं च

---

1. 'स्रदा', 2. 'णां क' ख. पाठः.

निखाय स्थापये(मे)त्यर्थः । स्यादुत प्ररेचनम् । उतेत्यप्यर्थे । प्रकर्षेण यदति-रिच्यते तत् प्ररेचनम् । उपभोगान्निधानाच्चातिरिक्तमपि स्यादित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

तयोरित्[1] । इन्द्रावरुणयोरेव रक्षणेन वयं धनं भजेमहि । निधीमहि चोपयुक्ता-दतिरिक्तम् । निहितादतिरिक्तमप्यस्तु ॥ ६ ॥

इन्द्रावरुणवामहंहुवेचित्रायराधसे ।

अस्मान्त्सुजिग्युषस्कृतम् ॥ ७ ॥

इन्द्रावरुणा । वाम् । अहम् । हुवे । चित्राय । राधसे । अस्मान् । सु । जिग्युषः । कृतम् ॥ ७ ॥

स्कन्दस्वामीयम् ।

हे इन्द्रावरुणौ! वामहं हुवे । किमर्थम् । चित्राय राधसे चित्रस्य धनस्यार्थाय । चित्रं धनं मह्यं दत्तमित्यर्थः । किञ्च अस्मान् सुजिग्युषः सुष्ठु जितवतः शत्रून् कृतं कुरुतम् । अस्मच्छत्रूनस्माभिर्जापयतमित्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

इन्द्रावरुणा । इन्द्रावरुणौ! वामहं हुवे चित्राय धनाय । तावस्माञ्छत्रून् जितवतः सुष्ठु कुरुतम् ॥ ७ ॥

इन्द्रावरुणनूनुवांसिषासन्तीषुधीष्वा ।

अस्मभ्यंशर्मयच्छतम् ॥ ८ ॥

इन्द्रावरुणा । नु । नु । वाम् । सिसासन्तीषु । धीषु । आ । अस्मभ्यम् । शर्म । यच्छतम् ॥ ८ ॥

स्कन्दस्वामीयम् ।

नुशब्दयोर्द्वयोरेकः क्षिप्रनाम, पदपूरणोऽपरः । हे इन्द्रावरुणौ! क्षिप्रं वां युवां सिसासन्तीषु संभक्तुकामासु धीष्वा, आकारः पदपूरणः,

---

१. 'त् तयोः इ' ग. पाठः.

कर्मसु । सप्तमीनिर्देशाद् वर्तमानेभ्य इति वाक्यशेषः । युष्मद्देवत्यानि कर्माण्यनु-तिष्ठद्भ्य इत्यर्थः । केभ्यः । अस्मभ्यम् । शर्म गृहं सुखं वा यच्छतं दत्तम् ॥ ८ ॥

वेङ्कटमाधवीयम् ।

इन्द्रावरुणा । इन्द्रावरुणौ ! क्षिप्रं वां संभक्तुमिच्छन्तु ध्यातृषु स्तोतृष्वस्मभ्यं सुखं प्रयच्छतम् । एको नुः पूरणः ॥ ८ ॥

प्रवामश्नोतुसुष्टुतिरिन्द्रावरुणयांहुवे ।

याम्रृधाथेसधस्तुतिम् ॥ ९ ॥

प्र । वाम् । अश्नोतु । सुऽस्तुतिः । इन्द्रावरुणा । याम् । हुवे । याम् । ऋधाथे इति । सधऽस्तुतिम् ॥ ९ ॥

स्कन्दस्वामीयम् ।

प्र वामश्नोतु प्रकर्षेण युवां व्याप्नोतु सुष्टुतिः शोभना स्तुतिः । हे इन्द्रा-वरुणौ ! यां हुवे । यामिति द्वितीयानिर्देशात् प्रतीति वाक्यशेषः । तृतीयार्थे[1] वा द्वितीया । यां प्रति यया वा युवामाह्वयामि । यां च ऋधाथे वर्धयथः । यो यो निजस्तुतेः फलं साधयाति स तां पुनःपुनः कारय(ति) । वर्धयति । कीदृशम् । सधस्तुतिं, सहहूतयोर्युवयोः स्तुतिम् । अथवा सधस्तुतिमिति तृती-यार्थे द्वितीया । यया सहस्तुत्या वर्धेथे इत्यर्थः । स्तूयमाना हि देवता वीर्येण वर्धन्ते ॥ ९ ॥

वेङ्कटमाधवीयम् ।

प्रवाऽश्नोतु । प्राप्नोतु वां सुष्टुतिरिन्द्रावरुणौ ! यां स्तुतिं प्रति वामहं हुवे यां च युवां वर्धयथः सहभूताम् ॥ ९ ॥

इति प्रथमस्य प्रथमे त्रयस्त्रिंशो वर्गः ॥

इति प्रथमे मण्डले चतुर्थोऽनुवाकः ॥

---

सोमानंस्वरणंकृणुहिब्रह्मणस्पते ।

कक्षीवन्तंयऔशिजः ॥ १ ॥

---

१. 'र्थे द्वि' ख. पाठः.

सोमानम् । स्वरणम् । कृणुहि । ब्रह्मणः । पते । कक्षीवन्तम् । यः । औशिजः ॥ १ ॥

स्कन्दस्वामीयम् ।

सोमानमिति चाद्या याः पञ्च ता ब्रह्मणस्पतेः । सोमानमित्यादौ याः पञ्चर्चस्ता ब्रह्मणस्पतिदेवताः । सोमानं 'षुञ् अभिषवे' अभिषोतारम् । कस्य । सामर्थ्यात् सोमस्य नः । स्वरणं 'स्वृ शब्दोपतापयोः' शब्दयितारम् अर्चयितारं च । कस्य । सामर्थ्यात् स्तुतीनाम् । यष्टारं स्तोतारं चेत्यर्थः । कृणुहि कुरु मां धनप्रदानेन । अथवा सर्वत्र यः शब्द्यते स स्वरणः प्रकाश इत्यर्थः । अभिषोतारं मां स्वरणं देवमनुष्येषु प्रकाशं कुरु । हे ब्रह्मणस्पते! । कमिव । उच्यते । कक्षीवन्तं, लुप्तोपममेतद् द्रष्टव्यं, कक्षीवन्तमिव ऋषिम् । कतमोऽयं कक्षीवान् । (य?) उच्यते । य औशिजः उशिक्पुत्रः ॥ १ ॥

वेङ्कटमाधवीयम् ।

सोमानं स्वरणम् । सोमानं प्रकाशवन्तं कुरु मां ब्रह्मणस्पते! कक्षीवन्तं यस्तथा कृतवानसि । यः कक्षीवानुशिक्प्रसूतः । स्वरतिः शब्दकर्मेति ॥१॥

योरेवान्योअमीवहावसुवित्पुष्टिवर्धनः ।
सनःसिषक्तुयस्तुरः ॥ २ ॥

यः । रेवान् । यः । अमीवऽहा । वसुऽवित् । पुष्टिऽवर्धनः । सः । नः । सिसक्तु । यः । तुरः ॥ २ ॥

स्कन्दस्वामीयम् ।

यो ब्रह्मणस्पती रेवान् धनवान् यश्च अमीवहा हिंसितॄणां हन्ता वसुवित् 'विदॢ लाभे' अपूर्वाणामपि धनानां लब्धा । अथवा विन्दतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । धनानां लम्भयिता स्तोतृभ्यो दातेत्यर्थः । पुष्टिवर्धनः सर्वप्रकारायाः पुष्टेर्वर्धयिता । सः नः सिषक्तु सेवतां, यस्तुरः त्वरिता क्षिप्रकारीत्यर्थः । अथवा यो रेवानित्यादिभिः पुत्रं प्रति निर्दिश्यते । ब्रह्मणस्पतिप्रसादाद् धनवत्त्वादिगुणः पुत्रोऽस्मान् सचताम् अस्माकं जायतामित्यर्थः ॥ २ ॥

वेङ्कटमाधवीयम् ।

यो रेवान् । यो धनवान् यश्च रक्षसां हन्ता यं कल्पयति पुष्टेर्वर्धयिता स भजतामस्मान् यः सर्वदा त्वरते कर्मस्विति ॥ २ ॥

मा नः॒ शंसो॒ अर॑रुषो धू॒र्तिः प्रण॒ङ्मर्त्य॑स्य ।
रक्षा॑ णो ब्रह्मणस्पते ॥ ३ ॥

मा । नः॒ । शंसः॑ । अर॑रुषः । धू॒र्तिः । प्रण॑क् । मर्त्य॑स्य । रक्ष॑ । नः॒ । ब्र॒ह्म॒णः॒ । प॒ते॒ ॥ ३ ॥

स्कन्दस्वामीयम् ।

माशब्दः प्रणगित्येतेन सम्बन्धयितव्यः । नः अस्माकं शंसः शंसनं[1] आशंसा विनाशाद्यभिलाषः । अररुषः देवेभ्यो हविषामदातुरयष्टुः स्वभूत-(य?)ः । यो हि न यजते स यष्टॄन् विनश्यन्त्वित्येवमाशंसति । सोऽस्य शंसः । (धूर्ष? धुर्व)तेर्वधकर्मणः धूर्तिर्हिंसा हिंसिता वा । स च मा प्रणक् । प्रपूर्वस्य नशेर्व्याप्तिकर्मण एतद्रूपम् । मा प्रणशत् मा प्रापदित्यर्थः । अथवा-नवग्रहैकपदत्वात् पृचेः सम्पर्कार्थस्येदं रूपं, न प्रपूर्वस्य नशेः । न इति च तृतीयार्थे द्वितीया । मास्माभिः प्रणक् सम्पर्चीत् मास्मान् प्रापदित्यर्थः । कः । शंसः अररुषो धूर्तिश्च । कस्य अररुषः । मर्त्यस्य मनुष्यस्य । रक्ष त्वं नः हे ब्रह्मणस्पते ! ॥ ३ ॥

वेङ्कटमाधवीयम् ।

मा नः शंसः । मास्मानदातुर्मर्त्यस्य कदर्यस्य शंसो न दातुं युष्मभ्यमिच्छामीति वादो हिंसकः प्राप्नोतु धनाभावात्, तथास्मान् त्वं रक्ष ॥ ३ ॥

स घा॑ वी॒रो न रि॑ष्यति॒ यमिन्द्रो॒ ब्रह्म॑ण॒स्पतिः॑ ।
सोमो॑ हि॒नोति॒ मर्त्य॑म् ॥ ४ ॥

सः । घ॒ । वी॒रः । न । रि॒ष्य॒ति॒ । यम् । इन्द्रः॑ । ब्रह्म॑णः । पतिः॑ । सोमः॑ । हि॒नोति॑ । मर्त्य॑म् ॥ ४ ॥

१. 'नं शासः आ' क. ख. पाठः.

स्कन्दस्वामीयम् ।

चतुर्थ्यां सोम इन्द्रश्च । चतुर्थ्यामस्यामृचि सोम इन्द्रश्च देवता न केवलो ब्रह्मणस्पतिः । घ इति पदपूरणः एवार्थे वा । स एव वीर. विक्रान्तः न रिष्यति न हिंस्यते केनचित् । यमिन्द्रो ब्रह्मणस्पतिः सोमश्च हिनोति 'हि गतौ वृद्धौ च' गच्छति वर्धयति वा मर्त्यं मनुष्यम् ॥ ४ ॥

वेङ्कटमाधवीयम् ।

सत्रा वीरः । यमेते पुत्रे प्रेरयन्ति स खलु न विनश्यति वीरः ॥ ४ ॥

त्वंतंब्रह्मणस्पतेसोमइन्द्रश्चमर्त्यम् ।

दक्षिणापात्वंहसः ॥ ५ ॥

त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् । दक्षिणा । पातु । अंहसः ॥ ५ ॥

स्कन्दस्वामीयम् ।

पञ्चम्यां दक्षिणाधिका । पञ्चम्यामस्यामृचि पूर्वाभ्यस्तिसृभ्यो दक्षिणाधिका । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः स्तौति यजते च त्वं तं हे ब्रह्मणस्पते! सोम इन्द्रश्च मर्त्यं मनुष्यं दक्षिणा च पातु रक्षतु अंहसः पापात् ॥ ५ ॥

वेङ्कटमाधवीयम् ।

त्वं तम्[1] । त्वं तं ब्रह्मणस्पते! सोम इन्द्रश्च मर्त्यं[2] यज्ञस्य पत्नी दक्षिणा च रक्षतु दारिद्र्यादा[3]हन्तुर्वा[4] रक्षसः ॥ ५ ॥

इति प्रथमस्य प्रथमे चतुस्त्रिंशो वर्गः ॥

---

सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ।

सनिंमेधामयासिषम् ॥ ६ ॥

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् । सनिम् । मेधाम् । अयासिषम् ॥ ६ ॥

---

१. 'तं ब्र', २. 'र्त्यं दक्षिणा य', ३. 'दंहसो वा र' ख. पाठः. ४. 'क्ष रक्षसः ॥' क. पाठः.

स्कन्दस्वामीयम् ।

चतस्रः सादसस्पत्याः । सदः प्रसिद्धं यज्ञगृहं तस्याधिपतिः सदसस्पतिः । कोऽसौ । अग्निः । कुत एतत् । अग्नेः सर्वयज्ञाधिपतित्वात् । आसु चर्क्षु यज्ञसाधनहविष्कृतिसमर्थनाद्यग्निकर्मदर्शनात् तद्देवत्याश्चतस्रश्चर्चः । सदसस्पतिमग्निम् । अद्भुतम् । महन्नामैतत् । महान्तम् । प्रियमिन्द्रस्य । तदायत्तत्वाद्धि यज्ञानां सोमपानार्थिन इन्द्रस्य प्रियः सदसस्पतिः । काम्यं प्रार्थयितव्यं सर्वस्तोत्राणाम् । सनिं, 'षणु दाने', धनदानम् । मेधां प्रज्ञां च । अयासिषम्, 'ईमहे यामी'ति याच्ञाकर्मसु पाठाद् यातिर्याच्ञाकर्मा, याचे ॥ ६ ॥

वेङ्कटमाधवीयम् ।

सदसस्पतिम् । सदसस्पतिं महान्तं सखायमिन्द्रस्य कमनीयं धनं प्रज्ञां चाया-चिषम् ॥ ६ ॥

यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन ।
सधीनांयोगमिन्वति ॥ ७ ॥

यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन । सः । धीनाम् । योगम् । इन्वति ॥ ७ ॥

स्कन्दस्वामीयम् ।

यस्मादृते येन सदसस्पतिना विना न सिध्यति यज्ञः । कस्य । विपश्चितश्चन । विपश्चिदिति मेधाविनाम । चनशब्दोऽप्यर्थे । मेधाविनोऽपि यजमानस्य । सः धीनाम् । धीरिति कर्मनाम । सहयोगलक्ष(णा ? ण)तृतीयार्थे (चतुर्थी ? षष्ठी) । यागकर्मभिः सह । योगं सम्बन्धम् । इन्वति व्याप्तिकर्मायं प्राप्नोति, यागकर्मभिः सम्बध्यते । सर्वयागकर्माणि करोतीत्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

यस्मादृते । यं विना न सिध्यति यज्ञो विदुषोऽपि स कर्मणां योगं व्याप्नोति ॥ ७ ॥

आदृध्नोतिहविष्कृतिंप्राञ्चंकृणोत्यध्वरम् ।
होत्रादेवेषुगच्छति ॥ ८ ॥

स्कन्दस्वामीयम् ।

चतुर्थ्यां सोम इन्द्रश्च । चतुर्थ्यामस्यामृचि सोम इन्द्रश्च देवता न केवलो ब्रह्मणस्पतिः । घ इति पदपूरणः एवार्थे वा । स एव वीरः विक्रान्तः न रिष्यति न हिंस्यते केनचित् । यमिन्द्रो ब्रह्मणस्पतिः सोमश्च हिनोति 'हि गतौ वृद्धौ च' गच्छति वर्धयति वा मर्त्यं मनुष्यम् ॥ ४ ॥

वेङ्कटमाधवीयम् ।

सघावीरः । यमेते त्रुट्ठे प्रेरयन्ति स खलु न विनश्यति वीरः ॥ ४ ॥

त्वंतंब्रह्मणस्पतेसोमइन्द्रश्चमर्त्यम् ।
दक्षिणापात्वंहसः ॥ ५ ॥

त्वम् । तम् । ब्रह्मणः । पते । सोमः । इन्द्रः । च । मर्त्यम् । दक्षिणा । पातु । अंहसः ॥ ५ ॥

स्कन्दस्वामीयम् ।

पञ्चम्यां दक्षिणाधिका । पञ्चम्यामस्यामृचि पूर्वाभ्यस्तिसृभ्यो दक्षिणाधिका । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यः स्तौति यजते च त्वं तं हे ब्रह्मणस्पते! सोम इन्द्रश्च मर्त्यं मनुष्यं दक्षिणा च पातु रक्षतु अंहसः पापात् ॥ ५ ॥

वेङ्कटमाधवीयम् ।

त्वं तम्[१] । त्वं तं ब्रह्मणस्पते! सोम इन्द्रश्च मर्त्यं[२] यज्ञस्य पत्नी दक्षिणा च रक्षतु दारिद्र्यादाहन्तुर्वा[३] रक्षसः[४] ॥ ५ ॥

इति प्रथमस्य प्रथमे चतुस्त्रिंशो वर्गः ॥

---

सदसस्पतिमद्भुतंप्रियमिन्द्रस्यकाम्यम् ।
सनिंमेधामयासिषम् ॥ ६ ॥

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् । सनिम् । मेधाम् । अयासिषम् ॥ ६ ॥

---

१. 'तं ब्र', २. 'र्त्यं दक्षिणा य', ३. 'दंहसो वा र' ख. पाठः. ४. 'क्ष रक्षसः ॥' क. पाठः.

स्कन्दस्वामीयम् ।

चतस्रः सादसस्पत्याः । सदः प्रसिद्धं यज्ञगृहं तस्याधिपतिः सदसस्पतिः । कोऽसौ । अग्निः । कुत एतत् । अग्नेः सर्वयज्ञाधिपतित्वात् । आसु चर्क्षु यज्ञसाधनहविष्कृतिसमर्थनाद्यग्निकर्मदर्शनात् तद्देवत्याश्चतस्रश्च र्वः । सदसस्पतिमग्निम् । अद्भुतम् । महन्नामैतत् । महान्तम् । प्रियमिन्द्रस्य । तदायत्तत्वाद्धि यज्ञानां सोमपानार्थिन इन्द्रस्य प्रियः सदसस्पतिः । काम्यं प्रार्थयितव्यं सर्वस्तोत्राणाम् । सानिं, 'षणु दाने', धनदानम् । मेधां प्रज्ञां च । अयासिषम्, 'ईमहे यामी'ति याच्ञाकर्मसु पाठाद् यातिर्याच्ञाकर्मा, याचे ॥ ६ ॥

वेङ्कटमाधवीयम् ।

सदसस्पतिम् । सदसस्पतिं महान्तं सखायमिन्द्रस्य कमनीयं धनं प्रज्ञां चाया-चिषम् ॥ ६ ॥

यस्मादृतेनसिध्यतियज्ञोविपश्चितश्चन ।
सधीनांयोगमिन्वति ॥ ७ ॥

यस्मात् । ऋते । न । सिध्यति । यज्ञः । विपःऽचितः । चन । सः । धीनाम् । योगम् । इन्वति ॥ ७ ॥

स्कन्दस्वामीयम् ।

यस्मादृते येन सदसस्पतिना विना न सिध्यति यज्ञः । कस्य । विपश्चितश्चन । विपश्चिदिति मेधाविनाम । चनशब्दोऽप्यर्थे । मेधाविनोऽपि यजमानस्य । सः धीनाम् । धीरिति कर्मनाम । सहयोगलक्ष(णा ? ण)तृतीयार्थे (चतुर्थी ? षष्ठी) । यागकर्मभिः सह । योगं सम्बन्धम् । इन्वति व्याप्तिकर्मायं प्राप्नोति, यागकर्मभिः सम्बध्यते । सर्वयागकर्माणि करोतीत्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

यस्मादृते । यं विना न सिध्यति यज्ञो विदुषोऽपि स कर्मणां योगं व्याप्नोति ॥ ७ ॥

आदृध्नोतिहविष्कृतिंप्राञ्चंकृणोत्यध्वरम् ।
होत्रादेवेषुगच्छति ॥ ८ ॥

आत् । ऋध्नोति । हविःऽकृतिम् । प्राञ्चम् । कृणोति । अध्वरम् । होत्रा । देवेषु । गच्छति ॥ ८ ॥

स्कन्दस्वामीयम् ।

(आदिति) निपातोऽथशब्दपर्याय आनन्तर्ये। कर्मभिः संयुज्यानन्तरम् । ऋध्नोति । 'ऋधु वृद्धौ' । सामर्थ्याच्चात्रान्तर्णीतण्यर्थः । वर्धयति । हविष्कृतिं हविष्क्रियाम् । हवींषि सारतो वृद्धानि करोतीत्यर्थः । प्राञ्चं कृणोति प्रकर्षगामिनं देवान् प्रति करोति अध्वरम् । होत्रेति वाङ्नाम । तृतीयार्थे चात्र प्रथमा । होत्रया च स्तुतिलक्षणया च वाचा । देवेषु देवान् प्रति गच्छति देवांश्च स्तौतीत्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

आदृध्नोति । गमनानन्तरमेव समर्धयति हविष्करणम् । प्राञ्चं कृणोति यज्ञम् । वाचा च देवेषु गच्छति ॥ ८ ॥

नराशंसंसुधृष्टममपश्यंसप्रथस्तमम् ।
दिवोनसद्ममखसम् ॥ ९ ॥

नराशंसम् । सुऽधृष्टमम् । अपश्यम् । सप्रथःऽतमम् । दिवः । न । सद्मऽमखसम् ॥ ९ ॥

स्कन्दस्वामीयम् ।

नराशंसं 'शंस स्तुतौ' नरैः शस्यत इति नराशंसः प्रकृतः सदसस्पतिरेव । देवतान्तरं वा । तथाह्याह —

"उक्ता याः सादसस्पत्याश्चतस्रः सदसस्पतिः ।
तासामन्त्या ऋगेका सा नाराशंसी नराशंसः ॥"

इति । तं नराशंसं सुधृष्टमं सुष्ठु प्रगल्भतममहमपश्यम् । सप्रथस्तमम् । सप्रथः पृथु । अतिशयेन सप्रथसं सप्रथस्तमम् । कमिव । दिवो न द्युलोकस्येव सम्बन्धिनं सद्ममखसम् । सद्म सदनमादित्यमण्डलं, तन्मखः महद् यस्य स सद्ममखाः आदित्यः । मखशब्दो हि 'रेजते अग्ने पृथिवी मखेभ्य' इत्यादिप्रयोगदर्शनादपठितमपि महन्नाम । सकारस्तु[1] तस्यैव छान्दसः उपजनः । पर्यायान्तरं वा सकारान्तं(रं?) तं सद्ममखसम् । (आ)दित्यमिवेत्यर्थः ॥ ९ ॥

१. 'स्तस्यै' ख. पाठः.

वेङ्कटमाधवीयम्।

नराशंसम्। नरैः शंसनीयमतिशयेन धृष्टं पश्यामि सर्वतः पृथुतमं द्युलोकस्य सम्बन्धिनमिव सूर्यं महनीयसदनमिति॥ ९॥

इति प्रथमस्य प्रथमे पञ्चत्रिंशो वर्गः॥

प्रतित्यंचारुमध्वरंगोपीथायप्रहूयसे।
मरुद्भिरग्नआगहि॥ १॥

प्रति। त्यम्। चारुम्। अध्वरम्। गोऽपीथाय। प्र। हूयसे। मरुत्ऽभिः अग्ने। आ। गहि॥ १॥

स्कन्दस्वामीयम्।

आग्निमारुतमुत्तमम्। अध्यायस्योत्तमं सूक्तमाग्निमारुतम्। प्रतिशब्दो लक्षणे कर्मप्रवचनीयः। त्यच्छब्दस्तच्छब्दपर्यायः। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः। योऽयमस्माभिः प्रकल्पितः तं प्रति। कीदृशम्। चारुं शोभनम्। अध्वरं यज्ञम्। गोपीथाय, सोमोऽत्र गौरुच्यते, सोमपानाय। प्रहूयसे प्रकर्षेणाहूयसे। एतज्ज्ञात्वा मरुद्भिः सहाग्ने! आगहि॥ १॥

वेङ्कटमाधवीयम्।

प्रतित्यम्। प्रति चारुमध्वरं सोमपानायाहूयसे[1]। सोऽग्ने! मरुद्भिः सहागच्छ॥ १॥

*नहिदेवोनमर्त्योमहस्तवक्रतुंपरः।
मरुद्भिरग्नआगहि॥ २॥

नहि। देवः। न। मर्त्यः। महः। तव। क्रतुम्। परः। मरुत्ऽभिः। अग्ने। आ। गहि॥ २॥

स्कन्दस्वामीयम्।

न देवो नापि मर्त्यः महः महत् तव सकाशात्। टार्थेऽम्। कर्मणा प्रज्ञया वोत्कृष्टः त्वत्तः श्रेष्ठो देवमनुष्येष्वपि न कश्चित्। तस्मान्मरुद्भिरग्न आगहि॥ २॥

---

१. 'से अग्ने' क. पाठः.

---

* एषा ऋक् तद्भाष्यं च क-ख-मातृकयोर्न दृश्यते।

वेङ्कटमाधवीयम् ।

नहि देवः । नहि देवो मर्त्यो वा महतस्तव कर्म तरति ॥ २ ॥

**येमहोरजसोविदुर्विश्वेदेवासोअद्रुहः ।**

**मरुद्भिरग्नआगहि ॥ ३ ॥**

ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ३ ॥

स्कन्दस्वामीयम् ।

रजःशब्दो लोकवचनः उदकवचनो वा । महो रजस इति चोभयत्र द्वितीयार्थे षष्ठी । ये महद् रजसः लोकमन्तरिक्षाख्यम् उदकं वा मेघं विदुर्जानन्ति विश्वे सर्वे देवासः दीप्ता दातारो वा अद्रुहः अद्रोग्धव्या (अ)द्रोग्धारो वा स्तोतॄणां यष्टॄणां च । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्यः । तैर्मरुद्भिरग्न आगहि ॥ ३ ॥

वेङ्कटमाधवीयम् ।

ये महः । ये मरुतो महान्तं लोकमन्तरिक्षं[1] च जानन्ति व्याप्ता[2] देवा द्रोहरहिताः ॥ ३ ॥

**यउग्राअर्कमानृचुरनाधृष्टासओजसा ।**

**मरुद्भिरग्नआगहि ॥ ४ ॥**

ये । उग्राः । अर्कम् । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ४ ॥

स्कन्दस्वामीयम् ।

ये उग्राः अन्येनाप्रसह्याः क्रूराः अर्कं देवम् । कतम(तिम ?)म् । इन्द्रम् । कुत एतत् । 'आर्चन्नत्र मरुतस्तस्मिन्नाजावि'तीन्द्रस्य मरुत्स्तुतिसम्बन्धदर्शनात् । आनृचुः । अ(र्च)तेः स्तुतिकर्मण एतद्रूपम् । 'वृत्रघ्नं तं प्रहर भगवो जहि वीरयस्वे'त्येवमादिभिर्वचनैः स्तुतवन्तः । अत्र चेतिहासः 'त्वां देवा अबिभ्युष' इत्यत्र निदर्शितः । अथवा संवादसूक्तेषु 'कयाशुभी'यादिषु या स्तुति-

१. 'कं जा' ख. पाठः. २. 'यान्ति' क. पाठः.

स्तामभिप्रेत्यैतदुच्यते — य उग्रा अर्कमि(न्द्रः ? न्द्रं) स्तुवन्तीति । कीदृशाः । अनाधृष्टासः अनाधर्षिताः अनभिभूतपूर्वाः ओजसा परबलेन । तैर्मरुद्भिः ॥४॥

वेङ्कटमाधवीयम् ।

य उग्राः । य उद्गूर्णा[१] अर्चनीयमिन्द्रमस्तुवन् बलेनान्यैरनभिभूताः ॥ ४ ॥

**ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः ।**

**मरुद्भिरग्न आ गहि ॥ ५ ॥**

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ५ ॥

**स्कन्दस्वामीयम् ।**

ये शुभ्राः शोभनाः घोरवर्पसः, वर्प इति रूपनाम, घोररूपाश्च । द्वयोश्चानयोः परस्परविरोधित्वात् कालभेदेन योजना । शोभनाः क्रीडाकाले । घोररूपाः सङ्ग्रामकाले । सुक्षत्रासः सुधन्वानः सुबला वा । रिशादसः क्षेप्तारो हिंसितॄणां प्रतिहिंसितार इत्यर्थः । तैर्मरुद्भिः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

ये शुभ्राः । येऽलङ्करणैः शोभमाना घोररूपाः सुबला रिशतामसितारः ॥ ५ ॥

इति प्रथमस्य प्रथमे षट्त्रिंशो वर्गः ॥

**ये नाकस्याधि रोचने दिवि देवास आसते ।**

**मरुद्भिरग्न आ गहि ॥ ६ ॥**

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ६ ॥

**स्कन्दस्वामीयम् ।**

नाक इत्यादित्यनाम । ये नाकस्याधि उपरि रोचने दीप्ते दिवि अथापि तानद्धि तेन सकृत्स्नवन्निगमा भवतीत्येवं दिवोऽवयवो (दिवि ? द्यु)शब्देनोच्यते । दिवि दिव एकदेशे[२] स्थाने सप्तमे वायुस्कन्धे देवास आसते । तैः ॥ ६ ॥

१. 'गी' क. पाठः. २. 'शे संस्था' क. ख. पाठः.

वेङ्कटमाधवीयम् ।

ये नाकस्य । य आदित्यस्य रोचने दिवि देवा वसन्ति ॥ ६ ॥

**यईङ्खयन्तिपर्वतान्तिरःसमुद्रमर्णवम् ।**

**मरुद्भिरग्नआगहि ॥ ७ ॥**

**ये । ईङ्खयन्ति । पर्वतान् । तिरः । समुद्रम् । अर्णवम् । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ७ ॥**

**स्कन्दस्वामीयम् ।**

ये ईङ्खयन्ति (ग ? ईङ्ख)तिर्गतिकर्मा गमयन्ति क्षिपन्तीत्यर्थः । किम् । पर्वतान् शैलान् । तिरः सत इति प्राप्तस्य नामनी । प्राप्ताः सन्तः । कं प्रति क्षिपन्ति । उच्यते । समुद्रम् । द्वितीयाश्रुतेः कर्मप्रवचनीयप्रतिशब्दाध्याहारः । पार्थिवं समुद्रं प्रति । कीदृशम् । अर्णवम् उदकवन्तम् । पर्वतक्षेपणेन चात्र बलवत्ता प्रतिपाद्यते । एतदुक्तं भवति — ये महाबलाः प्राप्ताः सन्तः पर्वतानपि समुद्रे क्षेप्तुं समर्था इति । अथवा पर्वतशब्दो मेघनाम । पार्थिवेन च समुद्रेण पृथिव्येव लक्ष्यते । ये गमयन्ति मेघान् वर्षाय पृथिवीं वर्षयन्तीत्यर्थः, मेघान् प्रति प्राप्ताः सन्तः । तैः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

ये ईङ्खयन्ति । ये चलयन्ति पर्वतान् तिरस्कुर्वन्ति चोदक(व)न्तं समुद्रम् ॥ ७ ॥

**आयेतन्वन्तिरश्मिभिस्तिरःसमुद्रमोजसा ।**

**मरुद्भिरग्नआगहि ॥ ८ ॥**

**आ । ये । तन्वन्ति । रश्मिऽभिः । तिरः । समुद्रम् । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ८ ॥**

**स्कन्दस्वामीयम् ।**

आतानो नाम व्याप्तिः । ये आतन्वन्ति व्याप्नुवन्ति स्वतेजोभिः रश्मिभिः रश्मिभिः तिरः प्राप्ताः पार्थिवमन्तरिक्षं वा । समुद्रशब्दो ह्यन्तरिक्षनामापि । नच केवलैः स्वतेजोभिः । किं तर्हि । ओजसा बलेन च । तैः ॥ ८ ॥

---

१. 'भिः रश्मिभिः । किं' क० पाठः.

वेङ्कटमाधवीयम् ।

आ ये । ये रश्मिसदृशैः प्रत्यक्षमारुतैरुदकं बलेन समुद्रं तिर आतन्वन्ति ॥ ८॥

**अभित्वापूर्वपीतयेसृजामिसोम्यंमधु ।**

**मरुद्भिरग्नआगहि ॥ ९ ॥**

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यं । मधु । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ९ ॥

स्कन्दस्वामीयम् ।

अभिशब्दोऽत्र 'अभिरभाग' इति लक्षणे कर्मप्रवचनीयः । त्वां प्रति । पूर्वपीतये पूर्वकालप्रवृत्ताय पानाय सृजामि । शुद्धोऽप्यत्र सृजतिः सोपसर्गार्थे द्रष्टव्यः । उत्सृजामि । अनादिकालप्रवृत्तं यत् पानं तदर्थं तुभ्यं ददामीत्यर्थः । किम् । सोम्यं सोममयं मधु । द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च सोमरसोऽत्र मधूच्यते । एतज्ज्ञात्वा मरुद्भिरग्न आगहि ॥ ९ ॥

वलभीविनिवास्येतामृगर्थागमसंहृतिम् ।
भर्तृध्रुवसुतश्चक्रे स्कन्दस्वामी यथास्मृति ॥[1]

इति भर्तृध्रुवसुतस्य[2] स्कन्दस्वामिनः कृतौ
ऋग्वेदभाष्ये प्रथमोऽध्यायः ॥

---

वेङ्कटमाधवीयम् ।

अभि त्वा । अभि सृजामि त्वा पूर्वपानाय सोममयं मधु[3] । सोऽग्ने! मरुद्भिः सहागच्छेति ॥ ९ ॥

इति प्रथमस्य प्रथमे सप्तत्रिंशो वर्गः ॥

ऋक्संहितायाः प्रथममध्यायं व्याकरोदिति[4] ।
कुशिकानां कुले जातो माधवः सुन्दरीसुतः ॥
इति श्रीवेङ्कटमाधवार्यविरचिते ऋक्संहिताव्याख्याने प्रथमे प्रथमोऽध्यायः ॥

---

१., २. 'ध्रु' क. ख. पाठः.　३. 'धु । अग्ने' क. पाठः.　४. 'ति यः ॥' ग. पाठः.

## स्मृतवाक्याद्यनुक्रमणी ।

| पुटम् | ऋक् | वाक्यानि | ग्रन्थनाम | ग्रन्थकर्तृनाम |
|---|---|---|---|---|
| १ | | 'दैव्या शमितार आरभध्वम्' | ... | ... |
| ,, | ,, | 'इदमु नवं वसोः सदने सीदाम' | ... | ... |
| ,, | ,, | 'युवा सुवासाः' | ... | ... |
| ,, | ,, | 'आ त्वा रथं यथोतये' | ... | ... |
| ,, | ,, | 'ब्रह्मजज्ञानम्' | ... | ... |
| ,, | ,, | 'तदद्य वाचः प्रथमं मसीय' | ... | ... |
| ,, | ,, | 'आपो रेवतीः' | ... | ... |
| २ | ,, | 'यो ह वाविदितार्षेयच्छन्दोदैवत-ब्राह्मणेन —' | आर्षेयब्राह्मणम् | ... |
| ,, | ,, | 'ऋषिराद्यो मधुच्छन्दाः' | ... | ... |
| ,, | ,, | 'आग्नेयं प्रथमं सूक्तं —' | ... | ... |
| ,, | ,, | 'यज्ञो वै यजमानः' | श्रुतिः | ... |
| ३ | ,, | 'अग्निर्वै देवानां होता' | ,, | ... |
| ,, | ,, | ... | ... | पाणिनिः |
| ४ | ,, | 'मा नः शंसो अररुषः' | ... | ... |
| ,, | ,, | 'इन्द्र सोमं पिब' | ... | ... |
| ७ | ४ | 'ओषध्यः पशवो वृक्षास्तिर्यञ्चः —' | ... | ... |
| ८ | ६ | 'त्रैसांवत्सरिकं सत्रं प्रजाकामः —' | ... | ऐतिहासिकाः |
| ११ | १ | 'पृथग्देवत्याः सन्नात उत्तरे —' | ... | ... |
| १२ | २ | 'जरते ह्वयति' | ... | ... |
| १३ | ३ | 'पपृक्षोमयहयति' | ... | ... |
| ,, | ,, | 'जिगातीन्वति' | ... | ... |
| ,, | ४ | 'तृच ऐन्द्रवायवः' | ... | ... |
| १६ | ७ | 'मैत्रावरुणः' | ... | ... |
| ,, | ,, | 'अहोरात्रे वै मित्रावरुणौ —' | ब्राह्मणम् | ... |
| २० | ३ | 'सत्यावेव नासत्यौ' | ... | और्णवाभः |
| ,, | ,, | 'सत्यस्य प्रणेतारौ' | ... | आग्रायणः |
| ,, | ४ | 'ऐन्द्रोऽयं पञ्चमस्तृचः' | ... | ... |
| ,, | ,, | 'वारेण शश्वता तना' | ... | ... |
| ,, | ,, | 'तना पुनान आयुषु' | ... | ... |

| पुटम् | ऋक् | वाक्यानि | ग्रन्थनाम | ग्रन्थकर्तृनाम |
|---|---|---|---|---|
| २२ | ७ | 'वैश्वदेवस्तृचः षष्ठः' | ... | ... |
| २४ | १० | 'सारस्वतोऽयं सप्तमस्तृचः' | ... | ... |
| २६ | १२ | 'वैश्वानरस्य विमितानि चक्षसा' | ... | ... |
| ,, | १ | 'सुरूपकृत्नुमित्यैन्द्रमा मेधातिथेः स्मृतम्' | ... | ... |
| ४० | ,, | 'आरुषत्यायति' | ... | ... |
| ४१ | ,, | 'इन्द्रो दीर्घाय चक्षस आसूर्यं—' | ... | ... |
| ,, | ,, | 'युञ्जन्ति ब्रध्नमरुषमित्याह —' | श्रुतिः | ... |
| ४३ | ४ | 'पडादहस्वधामिति मारुत्योऽनन्तरा—' | ... | ... |
| ४५ | ५ | 'एका वीळुचिदिन्द्राय मरुद्भिः सह —' | ... | ... |
| ५० | १ | 'वृत्रो महत् तमस्ततान —' | ... | ... |
| ५१ | ,, | 'अहन् गवा मघवन्' | ... | ... |
| ५५ | १० | 'पञ्चजना विवस्वन्तः' | ... | ... |
| ७२ | ४ | 'यद्वैनः श्रेष्ठस्तेन वसिष्ठः' | शतपथः | ... |
| ,, | ,, | 'ओथामो दैव' | ... | ... |
| ७५ | ८ | 'ऋघायते अभियुक्तो भयं ते' | ... | ... |
| ,, | ९ | 'सखे विष्णोवितरम्' | ... | ... |
| ७७ | ११ | 'पुत्रमिन्द्रसमं कुशिको ब्रह्मचर्यं —' | ... | ... |
| ,, | ,, | 'चत्वारः पृश्नेस्तनया आसन् —' | ... | चरकाध्वर्यवः |
| ८१ | ५ | 'इन्द्रो वै वृत्रं हनिष्यन् —' | ... | ऐतरेयिणः |
| ,, | ,, | 'इन्द्रो बलस्य बिलमपोर्णोत् —' | ब्राह्मणम् | ... |
| ९३ | ४ | 'सुखै रथेभिरूतये' | ... | ... |
| ,, | ,, | 'हविष्ठैरश्वैः सुवृता रथेन' | ... | ... |
| ९७ | १० | 'यावच्छोवै रेतसः —' | ब्राह्मणम् | ... |
| १०३ | ८ | 'मनुष्या वा इन्याः —' | ,, | ... |
| १०५ | १२ | 'रय्याति' | ... | ... |
| ,, | १ | 'ऋतुदेवता' | ... | ... |
| १०६ | २ | 'ऋङ् मारुती' | ... | ... |
| १०७ | ३ | 'तथा त्वाष्ट्री' | ... | .. |
| ,, | ४ | 'आग्नेयी' | ... | ... |
| १०८ | ५ | 'ऐन्द्रयेव पञ्चमी' | ... | ... |
| १०९ | ६ | 'मित्रावरुणयोः षष्ठी' | ... | ... |

| पुटम् | ऋक् | वाक्यानि | ग्रन्थनाम | ग्रन्थकर्तृनाम |
|---|---|---|---|---|
| १०९ | ७ | 'चतस्रो द्रविणोदसः' | ... | ... |
| ११० | ,, | 'द्रविणोदाः —' | ... | यास्कः |
| ,, | ८ | 'सममब्राह्मणे दानम्' | ... | ... |
| ,, | ,, | 'वंस्वानो वार्यापुरु' | ... | ... |
| ११२ | ११ | 'अश्विन्येकादशी ज्ञेया' | ... | ... |
| ११३ | १२ | 'आग्नेयी द्वादशी' | ... | ... |
| ,, | १ | 'ऐन्द्रं त्वनन्तरं सूक्तम्' | ... | ... |
| ११८ | ,, | 'ऐन्द्रावरुणमुत्तरम्' | ... | ... |
| १२४ | ,, | 'सोमानमिति चाद्या याः —' | ... | ... |
| १२६ | ४ | 'चतुर्थ्यां सोम इन्द्रश्च' | ... | ... |
| ,, | ५ | 'पञ्चम्यां दक्षिणाधिका' | ... | ... |
| १२७ | ६ | 'चतस्रः सादसस्पत्याः' | ... | ... |
| ,, | ,, | 'ईमहे यामि' | ... | ... |
| १२८ | ९ | 'उक्ता याः सादसस्पत्याश्चतस्रः —' | ... | ... |
| ,, | ,, | 'रेजते अग्ने पृथिवी मखेभ्यः' | ... | ... |
| १२९ | १ | 'आग्निमारुतमुत्तमम्' | ... | ... |
| १३० | ४ | 'आर्चन्नत्र मरुतः सस्मिन्नाजौ' | ... | ... |
| ,, | ,, | 'प्रहर भगवो जहि वीरयस्व' | ... | ... |
| ,, | ,, | 'त्वां देवा अबिभ्युषः' | ... | ... |

## LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

### Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Dåkshinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alankāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*), | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—**विरूपाक्षपञ्चाशिका Virupakshapanchasika** (Vedanta) by Virūpākṣanātha with the commentary of Vidyāçakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—**मातङ्गलीला Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—**तपतीसंवरणम् Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—**परमार्थसारम् Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—**सुभद्राधनञ्जयम् Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—**नीतिसारः Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—**स्वप्नवासवदत्तम् Svapnavasavadatta** (Nātaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—**प्रतिज्ञायौगन्धरायणम् Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—**पञ्चरात्रम् Pancharatra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—**नारायणीयम् Narayaniya** (Stuti) by Nārayaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*out of stock*). | 4 | 0 | 0 |
| No. 19—**मानमेयोदयः Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—**अविमारकम् Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—**बालचरितम् Balacharita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P |
|---|---|---|---|
| No. 22—**मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि Madhyamavyayoga-Dutavakya-Dutaghatotkacha-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—**नानार्थार्णवसंक्षेपः Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—**जानकीपरिणयः Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—**काणादसिद्धान्तचन्द्रिका Kanadasiddhantachandrika** (Nyāya) by Gangādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—**अभिषेकनाटकम् Abhishekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—**वैखानसधर्मप्रश्नः Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—**नानार्थार्णवसंक्षेपः Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—**वास्तुविद्या Vastuvidya** (Śilpa) (*out of stock*). | 0 | 12 | 0 |
| No. 31—**नानार्थार्णवसंक्षेपः Nanartharnavasamkshepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—**कुमारसम्भवः Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararuchasamgraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājaçūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asauchashtaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Charudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alankārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghaṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—**प्रपञ्चहृदयम् Prapanchahridaya.** | 1 | 0 | 0 |
| No. 46—**परिभाषावृत्तिः Paribhashavritti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—**सिद्धान्तसिद्धाञ्जनम् Sidhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—**सिद्धान्तसिद्धाञ्जनम् Do.** Do. (Part II). | 2 | 0 | 0 |
| No. 49—**गोलदीपिका Goladipika** (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—**रसार्णवसुधाकरः Rasarnavasudhakara** (Alankâra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—**नामलिङ्गानुशासनम् Namalinganusasana** (Kośa) by Amarasimha with the commentary Tikâsarvasva of Vandyaghatîya Sarvânanda (Part IV, 3rd Kâṇḍa). | 1 | 8 | 0 |
| No. 53—**शाब्दनिर्णयः Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | 0 | 12 | 0 |
| No. 54—**स्फोटसिद्धिन्यायविचारः Sphotasiddhinyayavichara** (Vyâkaraṇa). | 0 | 4 | 0 |
| No. 55—**मत्तविलासप्रहसनम् Mattavilasaprahasana** (Nâtaka) by Mahendravikramavarman. | 0 | 8 | 0 |
| No. 56—**मनुष्यालयचन्द्रिका Manushyalayachandrika** *(out of stock)* (Silpa). | 0 | 8 | 0 |
| No. 57—**रघुवीरचरितम् Raghuviracharita** (Kâvya). | 1 | 4 | 0 |
| No. 58—**सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana** (Vedânta) by Kṛsnânanda Sarasvatî (Part III). | 2 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinî of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhattâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasamgraha.** | 0 | 8 | 0 |
| No 63—किरातार्जुनियम् **Kiratarjuniya** (Kâvya) by Bhāravi with the commentary Śabdârthadîpikā of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No 67—तन्त्रसमुच्चयः **Tantrasamuchchaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śankara (Part I, 1–6 Patalas) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyâdîpikâ of Śrī Kumāra. | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Iśânaśiva gurudevamiśra (Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चयः **Tantrasamuchchaya**(Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara(Part II, 7—12 Patalas) (*out of stock*). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Iśānaśivagurudevamiśra (Part II. Mantrapâda). | 1 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipattiprakasa** (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya (Part I — Âcâra and Vyavahâra Adhyâyas). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrīkumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Iśānasivagurudevamiśra (Part III, Kriyāpāda 1—30 Patalas). | 3 | 0 | 0 |
| No. 78-**आश्वलायनगृह्यसूत्रम् Asvalayanagrhyasutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Ganapati Sāstri (Part I—1 & 2 Adhikaraṇas). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II—3—7 Adhikaranas). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavâlkyasmrti** with the commentary Bâlakrīḍa of Viśvarūpācārya (Part II. Prâyascittâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Ganapati Sastri (Part III, 8—15 Adhikaraṇas). | 3 | 4 | 0 |
| No. 83—**ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Patalas and Yogapāda). | 3 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No. 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya). by Krsnakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alankâra) of Mammaṭabhaṭṭa with two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsas). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanishat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasha** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangita) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotṣa) of Kumaraganaka. | 0 | 4 | 0 |
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |

*Apply to:—*

*The Curator*

*for the publication of Sanskrit Manuscripts,*

*Trivandrum.*